त्सेमनोहारिणींलक्ष्मीमित्यभिधायिनिप्रियतमेतद्दृष्टिकासंस्पर्शि॥ तल्पोपांतनिविष्टसस्मितसखीनेत्रोत्सवानंदितोनिर्यातः
शनकैरलीकवचनोपन्यासमालीजनइति॥ तेनासौद्विविधोबोध्यः॥ एतदभिप्रायेणैवास्योदाहरणद्वयंवक्ष्यति॥ अधिकमग्रेप्रप
चयिष्यामइत्यलंप्रसक्तानुप्रसक्तचिंतया॥ इतिश्रीजड्युपनामकगंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांप्रथ
मस्तरंगः॥ १॥ अनंतराभिधाननियामिकांनिर्वाहकत्वाख्यांसंगतिंसूचयन्शिष्यावधानायविभावनिरूपणंप्रतिजानीते॥ ननुनि
र्वाहकत्वस्यसंगतित्वेकिंमानमितिचेत्॥ स्थायिभावनिरूपणानंतरंविभावनिरूपणोपयुक्ताया:किमन्यद्रसचर्वणानिर्वाहकमितिजि
ज्ञासायाविषयत्वमवेहि॥ तदुक्तमभियुक्तैः॥ आनंतर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोह्यर्थः संगतिरिति॥ विवेचित

श्रीः॥ अथविभावानिरूप्यंते॥ विशेषेणभावयंत्युत्पादयंतीतितेविभावाः॥ तेचद्विविधाआलंबनविभावाउद्दीपनविभा
वाश्चेति॥ यमालंब्यरसःप्रवर्त्ततेसआलंबनविभावः॥

चेदंमणिमालायामस्माभिरितिनेहप्रस्तूयते॥ विभावपदप्रवृत्ति
निमित्तंसूचयंस्तल्लक्षयति॥ विषयताघटितप्रत्यासत्त्यालंबनविभावानामिवज्ञानद्वारकसमानाश्रयताप्रत्यासत्त्योद्दीपनविभावा
नामपिविभावत्वमविशिष्टमितितदन्यतरप्रत्यासत्त्यवच्छिन्नाज्ञानद्वारकप्रत्यासत्त्यवच्छिन्नैववायास्थायिभावनिष्ठाकार्यतातन्निरू
पितकारणत्वंविभावसामान्यलक्षणंमन्वानस्तंविभजते॥ पदप्रवृत्तिनिमित्तप्रदर्शनपुरःसरमालंबनविभावंलक्षयति॥ सर्वंवाक्यं
सावधारणमितिन्यायाद्यमालंब्यैवेत्यर्थः॥ तेनकदाचिद्रतिविषयत्वेप्युद्दीपनविभावेनातिव्याप्तिः॥ तथापिनायिकाभूषणादीनाम
पिकेषांचिन्नियमतोरतिविषयत्वान्नत्रातिव्याप्तिर्यदुक्तंगुणालंकारादिसंभिन्नेत्याद्यतोरसःप्रवर्त्ततइति॥ यद्विषयकत्वेनैवरसपद

र.त. प्रवृत्तिनिमित्तवांश्चित्तवृत्तिविषयरूपो रत्यादिः स्थायी भवति स आलंबनविभावः॥ नहि केवलभूषणादिविषयिणो रतेरसपदव्यवहा नौका
१५ यो॥ नायिकाविषयत्वेन तस्यास्तथात्वं तु सर्वसंमतमिति भावः॥ अनेन तथैवोद्दीपनविभावो लक्षितः॥ यद्यपि रसजनकनायिकाज्ञान
विषयत्वं नायिकायामतिप्रसक्तं॥ तथापि प्रकृष्टरसजनकज्ञानविषयत्वमनेनोक्तमिति न कोपि दोषः॥ विशेष्यतासंबंधेन यत्र रसस्त
त्र तादात्म्येनालंबनविभावः॥ प्रकृष्टरसजनकज्ञानविषयत्वसंबंधेन यत्र प्रकृष्टरसस्तत्र तादात्म्येनोद्दीपनविभाव इति दिगुत्तरत्रापि
सर्वत्र सुधीभिरूह्या॥ तत्कालप्रवृत्तचक्षूरागयोः कालमसहमानयोर्नायकयोर्घटनायै अगणितमहिमालंघितगुरुजनवंचनस्तन
धयविरोधी॥ इष्टाकीर्तिस्तस्यास्त्वयि रागः प्राणनिरपेक्ष इत्यादिभिर्वचनैर्नायिकायाः प्रेमदार्ढ्यमावेदयंती सखी प्रतिनायकस्यैषा
योरसमुद्दीपयति स उद्दीपनविभावः॥ तत्रालंबनविभावो यथा॥ प्राणस्य प्रतिमूर्तिः प्रत्यात्मा पुण्यलतिकायाः॥ अधि
दैवतं नयनयोः साम मया कापि सा सैव॥ क्तिः॥ प्राणस्य प्रतिमूर्तिः सदृङ्गिरतिशयप्रेमास्पदत्वात्॥ पुण्यलतिकायाः पुण्यमेवल
तानुकंपाविषयत्वात्तस्याः प्रत्यात्मा प्रतिकृतिः स्वर्गाधिकसुखजनकत्वात्॥ नयनयोरधिदैवतं सौंदर्यसागरताप्रयुक्तदिदृक्षाविषय
त्वादधिकतमुद्दिश्य दर्शनवितरणशीलत्वाच्च दैवतं च या कापि प्राणप्रतिमूर्तित्वया वा पुण्यप्रत्यात्मत्वेन वा नयनाधिदैवतत्वेन वा व्यव
हार्या मम मसा सैव मदीयतत्तदात्मिकैव सो दृष्टनायिका न तु यत्किंचिदुक्तान्यतमानात्मिकापि निरुक्तसकलप्रत्येकासाधारणधर्माणां
सर्वेषामेव तस्यां समावेशादित्यर्थः॥ एतेन सतिपदत्रयेण न्या मुग्धातेः करणाः साम मसैव सा सैव कैव योक्तान्यतमेति दिशान्वयाय रामः
क्लिश्यंतः समाहिताः॥ प्रत्येकं सकलतादात्म्यप्रत्यायकवीप्सायामेव सामंजस्यात्॥ विधेयकोटावधिकार्थावगाहिबोधस्याभ्युपगमे तुल्य १५

उक्तोद्देश्यकोटावधिकार्थावगाहिबोधस्याप्यादरणीयत्वापत्तेश्च॥ दंडेरक्ताभेदस्योद्देश्यपदादवगमेपिविधेयीभूतदंडाभेदस्यरक्तेन
वगमात्समानसंवित्संवेद्यत्वेमानाभावादित्यलंपल्लवितेन॥ शृंगारस्योद्दीपनविभावान्प्रमाणपुरःसरमाह॥ प्रियजनआलंबनसंबंधि
सख्यादिः वस्तुतस्तुप्रियजनोनायकाद्यालंबनमेवभरतसूत्रस्यहिविधविभावसाधारण्यात्त्वयंतस्यैवविवेचनावसरेणालंबनविभा
वस्यप्रदर्शनादुद्दीपनेत्युक्तमितिविभावनीयं॥ सुधादीधितिस्त्वद्रष्टवसूत्रधारःप्रख्यापनद्वारानटोद्दिष्टार्थप्रकर्षकत्वात्पुष्पकेतोर्नृत्य
तयाध्यवसिततत्तद्विषयालंबना —— नालंबनादिशीलनयानटस्यमदनस्यनृत्यारंभविषयांतरानालंबनपुरःसरंनापि

शृंगारस्योद्दीपनविभावाः॥ तत्रभरतः॥ ऋतुमाल्यालंकारैःप्रियजनगांधर्वकाव्यसेवाभिः॥ उपवनगमनविहारैः
शृंगाररसःसमुद्भवति॥ चंद्रचंदनादयऊहनीयाः॥ यथा॥ संध्याशोणांबरजवनिकाकामिनोःप्रेमनाट्योन्नाटोभ्राम्य
द्भ्रमरविरुतंमारिषःकोपिकालः॥ तारापुष्पांजलिमिवकिरन्सूचयन्पुष्पकेतोर्नृत्यारंभंप्रविशतिसुधादीधितिःसूत्र
धारः॥ हास्यस्यविभावाः॥ तत्रभरतः॥

काद्यालंबनालंबनंसूचयन्ननुभावयन्प्रविशतिरंगभूमिगोचरोभवतिकिंकुर्वन्निवता
रापुष्पांजलिंनक्षत्राण्येवपुष्पाणिस्वच्छत्वात्परिच्छिन्नपरिमाणवत्तयाप्रकाशमानत्वाच्चतेषामंजलिंविरलंजवनिकाप्रांतप्रपातेन
किरन्निवेत्युत्प्रेक्षा॥ संध्येति॥ संध्याकालताम्राभ्रमेवजवनिकाच्छादनपटःपात्रप्रादुर्भावकत्वात्॥ यद्वासंध्यैवशोणांबरस्यजवनिका
तेननैकप्रसरताभंगोपि॥ एतद्व्याख्यानेकोपीत्यस्यवसंतादिरित्यर्थः॥ कामिनोःप्रेमनाट्योन्नटप्रकटनीयवस्तुनटायत्तत्वात्॥ भ्राम्यद्भ्र
मरविरुतंतत्कालमिलन्नलिननिर्गतमधुकररणितंनांदीप्रारंभनियतपूर्ववृत्तिर्वाकोपिचंद्रादयोपलक्षितःकालःसमयोमारिषःसूत्रधा

रसधर्मोपरूपश्चंद्रकार्यप्रकर्षपोषकत्वादित्यर्थः॥

र०त० विपरीतालंकारैर्बाह्वादिभूषणानां पादादावलंकरणैः॥ विकृताचारो ग्रीष्मे वह्निसेवनादिः॥ विकृताभिधानं किंनरेति वक्तव्ये किंनलेत्य
१६ भिधानं॥ विकृतवेषः परिधानीयप्रावरणतैः विकृतैरर्थविशेषैः कुब्जवामनपीटाद्यैः॥ हसतीति॥ अनेनेति शेषः॥ पद्यांत भावितण्य
र्थमिदं हास्यप्रतीत्यर्थः॥ एतेन विकृतैरर्थविशेषैरित्यस्योदाहरणमपश्यंतु एतैरितिपदपूरणेनोक्तार्थतात्पर्यकृतमातत्सदं व्याचक्षाणाः
परास्ताः॥ अंगवैकृत्यं खंजत्वादिकं॥ नटो मायाशिशुकायां बालमुकुंदमूर्तिं नटयत्यवस्कंदति॥ किं कुर्वन्॥ केयूरं बाहुभूषणं घर्घरयन्न
क्वणतः क्वणनव्यापारं कुर्वन्॥ अनेन विपरीताचार आवेदितः॥ पद्यघर्घरः पादभूषणं तत्करोतीति घर्घरयन्॥ तेन विपरीतालंकरणम्

विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च॥ विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः॥ अंगवैकृत्यादयऊहनीयाः॥ य
था॥ केयूरं घर्घरयन्भ्रमयन्मौलिं विवर्तयन्बाहू॥ नेत्राञ्चलं चपलयन्नटयति मायाशिशुकायां॥ करुणस्य विभावाः॥ तत्र
भरतः॥ इष्टजनस्य विनाशाच्छापात्क्लेशाच्च बंधनाद्व्यसनात्॥ अस्मादर्थविशेषात्करुणरसाख्यः समुद्भवति॥ वधदादिस्त्वा
दयऊहनीयाः॥ यथा॥ त्वां पश्यतो भुजगपाशनिबद्धदेहमद्यापि मे यदसवो न बहिः प्रयांति॥ नेत्रे निमीलयसि पश्यसि नैव
तावदास्यं मदीयमिति लक्ष्मण युक्तमेव॥ कं भवति॥ मौलिं मस्तकं भ्रमयन्घूर्णयन्बाहू विवर्तयन्नितस्ततः क्षिपन्नेत्रांचलं चक्षु
रावरणपक्ष्म चपलयन्विवलयन्नित्यर्थः॥ अत्र क्वचित्पुस्तके मायाशिशुरिति प्रथमांतपाठो दृश्यते स केयूरं घर्घरयन्निति विशेषणासामं
जस्यादुपेक्षणीयः॥ इष्टजनस्येति सर्वत्र पंचम्यंतेन्वेति॥ क्लेशो ज्वरादिः॥ व्यसनं राजोपद्रवादि॥ अत्र करुणरसाख्यो स्मादर्थविशेषात्समुद्भवतीं रस:
तिसामान्यवाक्यार्थबोधोत्तरं विशेषाकांक्षायां विशेषवाक्यार्थबोध एवमग्रेपि बोध्यं॥ हे लक्ष्मण भुजगपाशनिबद्धदेहं त्वां पश्यतो मे ऽसवो यद्बहि १६

नेप्रयांतितस्माद्धेतोस्त्वंनेत्रेनिमीलयसिपिधत्स्वेममास्यंनैवपश्यसितद्युक्तमेवेतिरामस्योक्तिः॥नचखड्गोपादानंव्यर्थं॥आयुधना
मुत्कर्षापकर्षकृताभिभवादीर्ष्याया द्वैरोद्रानुसक्तेः॥नचैवमायुधपदोपादानंव्यर्थं॥प्रमादपतितखड्गाभिभवात्तदनुसक्तेः॥अभिभ
वश्चपराभवमात्रंतेनवक्ष्यमाणविदारणेननपौनरुक्त्यं॥वैकृतभेदोनादरचेष्टा॥विदारणंनिकृंतनं॥संग्रामसंभवार्थंआक्रमणादिः॥
भार्गवेप्रतिकस्यचिदुक्तिः॥हेभार्गवैषातावकीलदीयानिस्त्रिंशधारानिशाखड्गधारालक्षणारात्रिर्विजयतेसर्वोत्कर्षेणवर्तते॥धारा

रौद्रस्यविभावाः॥तत्रभरतः॥आयुधखड्गाभिभवाद्वैकृतभेदाद्विदारणाच्चैव॥संग्रामसंभवार्थादेभ्यः संजायतेरौद्रः
॥वैरिदर्शननिर्भर्त्सनादयऊहनीयाः॥यथा॥तन्वतीतिमिरद्युतिंकृतवतीप्रत्यर्थिचक्रव्यथामेषाभार्गवतावकीवि
जयतेनिस्त्रिंशधारानिशा॥युद्धक्रुद्धविपक्षपक्षविदलत्कुंभींद्रकुंभस्थलीभ्रश्यन्मौक्तिककैतवेनपरितस्तारावलिंव
र्षति॥वीरस्यविभावाः॥तत्रभरतः॥उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात्॥विविधादर्थविशेषाद्वीररसोना
मसंभवति॥विजयबलादयऊहनीयाः॥

यानिशासाम्यप्रतिपादकसाधारणधर्मप्रतिपादनायतांविशिनष्टि॥तिमिरद्युतिंत
न्वतीति॥द्योतमानंतिमिरमंधकारकार्यकारिनेत्रपटलंतन्वतीपरेषांविस्तारयंतीपुनःकीदृशीप्रत्यर्थीत्यादिप्रतिकूलमर्थयंतितेप्र
त्यर्थिनस्तेषांचक्राणयेवचक्रवाकास्तेषांव्यथांकृतवतीप्राणप्रियवियोगसंपादकत्वात्॥केषत्याकांसायांयुद्धेत्यादि॥यासंग्रामेस्वभ्रान्ता
शत्रूणांसैन्येविदीर्णोभ्योगजमुख्यगंडस्थलीभ्योनिःपततांमौक्तिकानांव्याजेनपरितःसमंततस्तारावलिंमौक्तिकपंक्तिंवर्षतिविकि
रतीत्यर्थः॥उत्साहयुक्ततामतेर्विषादाभावाद्विस्मयाभावान्मोहकारणक्रोधाच्चेत्यर्थः॥विविधादुत्साहजनकत्वेनलोकशास्त्रावगतविवि

एष रामो जंभारिदंभापहबाहुवीर्यैर्दुर्गर्वापहारकबाहुबलो लंकाधिपो रावणः संयति संग्रामे शंकनीयो बलवदनर्थहेतुतया संभाव
नीय इत्यमुना प्रकारेणालपंतं हनुमंतं स्मितै रुत्साहसंभवैरुत्तरयांचकारेत्यर्थः॥ केचिद्व्यवहारमात्रदक्षा वपुषा कायेन विनयपरो
पसर्पणं वहंति प्राप्नुवंति केपि केचिच्छास्त्रनिष्णातबुद्धयो वचसा शास्त्रेण चारुचर्यां शिष्टाचारं चरंति संपादयंति केपि संतो महामहि
मपुण्यशीला अतिथौ याचके समुपागते प्राप्ते सति पुलकैः रोमांचैः सपर्यां पूजां पल्लवयंत्यारभंते॥ मुरारिः श्रीकृष्णः समुदंचती प्रका
शमाना दीपरेखाभिरामा दीपकलिकासदृशी द्युतिर्यस्य तं कौस्तुभं यत्संबभार तदविरलजाग्रद्भक्तिभाजो निरंतरोद्यद्भजनप्रियाः प्रा

युद्धवीरविभावो यथा॥ लंकाधिपः संयति शंकनीयो जंभारिदंभापहबाहुवीर्यः॥ इत्यालपंतं हनुमंतमेष रामः स्मितैरुत्त
रयांचकार॥ दानवीरविभावो यथा॥ वपुषा विनयं वहंति केचिद्वचसा केपि चरंति चारुचर्यां॥ अतिथौ समुपागते सपर्यां पु
लकैः पल्लवयंति केपि संतः॥ दयावीरविभावो यथा॥ कथमविरलजाग्रद्भक्तिभाजो निशायां तमसि दुरवगाहे प्राणिनो वीक्ष
णीयाः॥ इति किमु समुदंचद्दीपरेखाभिरामद्युतिमुरसि मुरारिः कौस्तुभं संबभार॥ ननु स्वनिष्ठ उत्साहः कथमुद्दीपनविभा
व इति चेत्॥

णिनो लोका निशायां रात्रौ दुरवगाहे तमसि सति कथं वीक्षणीया द्रष्टव्या इति मत्वा किंस्विति सिद्धविषया हेतूत्प्रेक्षा नि
रुपाधिपरदुःखप्रहारणेच्छारूपां दयां पुष्णाति॥ ननूत्साहाध्यवसायादित्यनेनोत्साहस्योद्दीपनविभावत्वमभिमतमाहोस्विदुत्साह
युक्तामतेरध्यवसायपदार्थस्य॥ नाद्यः॥ स्वस्य स्वानुद्दीपकत्वात्॥ नांत्यः॥ उत्साहयुक्तामतेरुत्साहसमानाधिकरणत्वात्तस्य वृत्तित्व
नियमेन स्वजन्यत्वेन चानुमापकताधौरेयानुभावतापत्तेरनौचित्यादित्यभिप्रायेण शंकते॥ स्वनिष्ठ इत्यनेनानुभावकतायोग्यत्वमादर्शितं॥

उत्साहइत्युपलक्षणं॥तद्युक्तनामतिरित्यपिबोध्यं॥कथमिति॥स्वस्यकार्यात्मकानुभावभूतोत्साहयुक्तनामतेश्चस्वकारणत्वासंभवादि
त्याशयः॥नह्युत्साहयुक्तनामतेःसर्वस्याएवोत्साहजन्यत्वनियमः किंतूत्साहांशेलौकिक्याएवभाव्युत्साहकर्तव्यतामतिरुत्साहांशे
ऽलौकिकीतेनविनैवजायमानोत्साहमुद्दीपयितुंप्रभवत्येवेतितथाभूतमतिविषयउत्साहउद्दीपनविभावोयुक्तएव॥अतएवस्वस्य
स्वजनकत्ववैमत्यपरिहारायैवाध्यवसायपर्यंतंसूत्रितवंतोभरताचार्याइत्यभिप्रायेणोत्तरयति॥ज्ञायमानएवेत्येवकारेणज्ञानेस्वज
न्यत्वस्वव्याप्तिपक्षधर्मत्वावगाहित्वस्यचानुमापकतोपयिकस्यव्यवच्छेदः॥इतिनविशेषणएतत्कृतोनविशेषः॥तथाचपक्षावृत्तेरिवप
क्षवृत्तेरप्युद्दीपनविभावत्वमविशिष्टमेवेतिभावः॥तस्यचनानुभावकतासंभवतिस्वजन्यत्वस्यस्वस्मिन्नसंभवात्॥अतएवोत्सा

सत्यं॥उद्दीपनविभावोज्ञायमानएवगमकः सचस्वनिष्ठःपरनिष्ठोवेतिनविशेषः॥अनुभावस्तुस्वनिष्ठएवगमक
स्तस्यानुमापकत्वेनपक्षवृत्तित्वनियमादिति॥

होपनीतभानात्मकोत्साहयुक्तनामतेरपिनतथात्वंस्वोपनीतभानस्यस्वाजन्य
त्वात्स्वजन्याया उत्साहलौकिकज्ञानात्मिकायाउत्साहयुक्तनामतेश्चतथात्वमसंभविव्याप्तिविशिष्टपक्षधर्मताज्ञानाभावात्तदेतदभि
ब प्रेत्याह॥स्वनिष्ठएवेतिपक्षधर्मताज्ञानकारणत्वेविप्रतिपन्नस्यमतंव्यवच्छेत्तुमेवकारः॥ननूत्साहव्याप्योत्साहयुक्तनामतिमानहमि
तिव्याप्तिविशिष्टवैशिष्ट्यज्ञानंसंभवत्येवेत्यतआह॥तस्येति॥अनुमापकत्वेनानुमितिजनकज्ञानविषयत्वेन॥पक्षवृत्तित्वेति॥पक्ष
वृत्तितयाज्ञायमानत्वावश्यंभावादित्यर्थः॥अयंभावः॥भवतिह्युत्साहव्याप्योत्साहयुक्तनामतिमानहमितितूत्साहांशेलौकिकज्ञानंस्व
स्मिन्नुत्साहवत्त्वावगाहित्वकृतःसिद्धोसत्यांपक्षत्वंनचपक्षत्वंविनापक्षत्वविशिष्टधर्मतयाज्ञानंसंभवतीति॥परबुद्धेरप्रत्यक्षत्वादुत्साह

युक्तनामत्यनुमितेश्चोत्साहानुमिति

तुल्यसामग्रीकत्वात्तद्धेतोरेवास्तु किं तेनेतिन्यायात्पुरुषांतरीयानुमापकज्ञानविषयतयापि नोत्साहप्रयुक्ततामतिरनुभावइत्याशंक्यनाक्त्
॥ननु निरुपाधिपरदुःखप्रहाणेच्छादयासाच दुःखद्विष्टसाधनताग्रहे सत्येव तत्प्रहाणेच्छात्मिका संजायते तेन तथाचनतत्कृतोत्साहकालेव
श्यंद्विष्टसाधनताज्ञानजन्यद्वेषविषयीभूतंकिंचिद्विष्टजनसंबंधितयाज्ञातमस्त्येवेति तज्जन्यचित्तवैक्लव्यस्याप्यवश्यभावे किं दया
याः पार्थक्येनेति शंकते॥करुणएव दयावीरे किं नांतर्भवतीति वेमस्यं परिहरति॥साचेति॥परकीयदुःखे द्विष्टसाधनताग्रहाधीने
च्छारूपा दयाचेत्यर्थः॥तथाच केवलकरुणाया अतिरिक्तत्वावश्यंभावेविनाभूतदयायाः करुणेंतर्भावोयुक्त इत्याशयः॥उत्तरयति॥

ननु दयावीरः करुणएव कथं नांतर्भवति निरुपाधिपरदुःखप्रहाणेच्छा दयासाच करुणया विनानसंभवतीति चेत्॥
करुणस्य स्थायिभावः शोको दयावीरस्य स्थायिभाव उत्साह इति स्थायिभावभेदेन भेदात्॥ननु दयावीरे करुणरस
प्रतीतेः कागतिरिति चेत्सत्यं॥करुणया विना दयावीरस्याननुभावात्तत्र करुणाया अनुभावकत्वाभ्युपगमादिति॥भया
नकस्य विभावाः॥ स्थायिभावभेदेन भेदे सति विविक्तदयावीररसप्रतीतिः किं नेत्याशंकते॥इच्छासामग्र्या बलवत्त्वेन प्रथमं दयावीरोत्प
त्तौ सत्यामेव तदनंतरभाविद्वेषविषयीभूतकिंचित्संबंधित्वप्रकारकज्ञानात्तस्यावैक्लव्योत्पत्तेरित्यर्थः॥तथाच लिंगोपहितलैंगिकभान
वादेन सकरुणदयावीररसप्रतीतिनियमोप्युपपन्न इति भावः॥यत्र च वैक्लव्यानंतरभाविनापरदुःखप्रहाणविषयककृतिसाध्यताज्ञानेन दयाजनि
नात्तत्राप्यसौ न वैक्लव्यकार्यमन्यथासिद्धत्वात्॥दयासामग्रीकाले वैक्लव्यसामग्र्या अनपायेनावश्यंभाविनि वैक्लव्ये तु दयानन्यथासिद्धत्वमेवाप्यवसीयं
त इति निगर्वस्तदेतदभिप्रेत्योक्तं करुणया विनेत्यादि॥आस्तां वान्यथासिद्धिर्नैतावतापचीयते किंचिद्व्यासावितिवस्तुतस्त्वनुभावकत्वाभ्युपगमाद्व्यज

दर्शनंज्ञानमात्रं॥कृतकइतिस्वार्थेकः॥लोकेमांपाहरिर्नृसिंहोव्यालोकितदृष्टः कीदृशउद्यदित्यादि॥उद्यत्क्रांतयः प्रकाशमानाःकठोरा
स्तीक्ष्णायेकेसराःसटास्तैर्दलंतःस्फुटितायेपाथोधरामेघास्तेभ्यः प्रस्खलंत्यः प्रादुर्भवंत्योयाविद्युतस्तासांदीधितिभिःकांतिभिरकांचनाः
कांचनाःसंपद्यंतेतथाकृताजगत्संबंधिनोनत्वेकदिग्वर्तिनोनिःशेषाःसर्वेमहीधरायेनसइत्यर्थः॥तेषामेवात्युच्चतयाप्रथमप्रकाशेनप्र
धानतयानिर्देश्यत्वमभिमतं॥जगत्त्वनिःशेषभूमीधराश्चेतिगोबलीवर्दन्यायेनभूमीधरग्रहणसमर्थनंतुनिःशेषविशेषणाप्रष्टार्थत्वा
पत्यानादरणीयं॥पुनःकीदृशःस्फूर्जदित्यादि॥स्फूर्जन्नवृद्धोयःकंठनिनदोगर्जनंतेनभिन्नाविदीर्णायावसुधातस्यास्तेनैवविवरेणप्रवि

नत्रभरतः॥विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात्॥गुरुनृपयोरपराधात्कृतकःसभयानकोज्ञेयः॥बंधुवं
धनश्रवणश्मशानदर्शनादयऊहनीयाः॥यथा॥उद्यत्कांतिकठोरकेसरदलत्पाथोधरप्रस्खलद्विद्युद्दीधितिकांचनीकृ
तजगन्निःशेषभूमीधरः॥स्फूर्जत्कंठनिनादभिन्नवसुधामार्गप्रविष्टद्विजप्रोद्दाशीर्वचनप्रहर्षितबलिर्व्यालोकिमांपातुहरिः
॥बीभत्सस्यविभावाः॥तत्रभरतः॥अनभिमतदर्शनेनचगंधरसस्पर्शशब्ददोषैश्च॥उद्वेजनैश्चबहुभिर्बीभत्सरसःसमुद्भवति
॥अहृद्यवस्तूनांश्रवणस्मरणादयऊहनीयाः॥

ष्टाःपतितायेद्विजाब्राह्मणास्तेषांप्रोद्दान्योजस्वीनियान्याशीर्वचनान्यभयतात्पर्येणोच्चा
रितानितैःप्रहर्षितोहृष्टजनसंपर्किनोबलिर्नामग्रहणेनाभेकदेशग्रहणाद्बलिसद्मायेनसइत्यर्थः॥एतेननृसिंहावतारेबलेरसत्वमुद्भा
वयंतःसमाहिताः॥केचित्तुकल्पांतरीयबलेश्चिरंजीविनःसत्तामादायसमादधति॥परेतुलोकोत्तरसंस्थानशब्दतात्पर्यकमसंबंधेसं
बंधातिशयोक्तिरूपंप्रकृतविशेषणद्वयंनेपथ्यात्मनिमायाहरौप्रकृतवाक्यार्थकर्मीभूतेयोजयंति॥अत्रपुरुषविशेषेणतद्ग्राह्येंद्रिय

ग्राह्यदोषदूषितार्थविषयज्ञानंजुगुप्साकारणं

र.त. नसर्वस्य सर्वमिति विशेषप्रतिपादनाय पृथगुक्तिः॥ इदमुपलक्षणमित्याहो हेजनेरिति॥ न्यूनतां परिहरति॥ श्रवणेत्यादि॥ करिणां र नौका
१२ क्तैरवसिक्तान्यालिप्तान्यत एव कुत्सितान्यंगान्यवांगकानि येषां तैः प्रेतानां बटुभिः पुरभिदः शिवस्य पुरोग्रे नृत्यं नर्तनं समारभ्यते क्रिय
ते किं कृत्वा योधानां भटानां नामधरैरेवाशोककुसुमैः रक्तत्वान्नेत्रैरवसितैरंबुजैः पुंडरीकैर्नीरक्तत्वाद्दंतैरेव कुंददलैः कुंदकुसुमपत्रैः स्व
कसमानाकृतित्वात्करैरेव सरसिजैः संकुचितांगुलिदलभाक्त्वात्पुष्पांजलिं संपाद्य दत्त्वा पुनः किं कृत्वा झिल्लीं वर्षासु रटंतं टिटीति प्रा
प्यभाषया प्रसिद्धं प्राणिनमेव कर्णयुगमुभयपार्श्वस्थितं वाद्यविशेषद्वयं विधाय॥ यद्वा करिणां कर्णयुगं झिल्लीं वाद्यविशेषं विधायेत्यर्थः

यथा॥ योधानामधरैरशोककुसुमैर्नेत्रैः सितैरंबुजैर्दंतैः कुंददलैः करैः सरसिजैः संपाद्य पुष्पांजलिं॥ झिल्लीं कर्णयुगं विधा
य करिणां रक्तावसिक्तांगकैः प्रेतानां बटुभिः पुरः पुरभिदो नृत्यं समारभ्यते॥ अद्भुतस्य विभावाः॥ तत्र भरतः॥ यत्त्वतिशया
र्थयुक्तं वाक्यं शिल्पं च कर्म रूपं च॥ तत्सर्वमद्भुतार्थे रसोद्भुतो नाम संभवति॥ मायेंद्रजालादय ऊहनीयाः॥ यथा॥ उद्दामोद्दाम
मायत्प्रतिभटदलनोदग्रजाग्रत्स्वभावः सोयं देवो मुदे वो भवतु नरहरिस्तारिताशेषविश्वः॥

॥ यत्त्वित्यादितः कार्यगतविशेष
स्यैवोक्त्या कारणगतविशेषासंग्रहः॥ एवं तत्सर्वमद्भुतार्थैरित्यनेन वास्तविकपदार्थविवक्षया भासहेतुतया सर्वसंमतेंद्रजालादेरसंग्र
हश्चेति प्राप्ते पूरयति॥ मायातपःसाध्यप्रभावातिशयः॥ स यथा॥ क्षौमं केनचिदिंदुपांडु तरुणा मांगल्यमाविष्कृतं निष्ठ्यूतश्चरणोपभोग
सुलभो लाक्षारसः केनचित्॥ अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैर्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वंद्विभिरित्याद्यभिज्ञान रामः
शाकुंतलीये॥ तारिताशेषविश्वः सकलपरमानर्थविनाशकत्वात्॥ उद्दामेत्यादि॥ परमोद्भटानामतिशयेन हि रुक्तिमीयतां प्रतिभटानां दलने १२

नोदग्रंसातिशयंजाग्रदनुभूयमानः प्रभावः प्रतापोयस्यसतथासोयंनरहरिर्देवोवामदेसंतोषायभवतुसकोयस्यप्रौढैः प्रतापैरोजोभिरे
वोद्भटाभिर्दुर्निरीक्ष्याभिर्विकटाभिः करालाभिः सटाकोटिभिः केसराग्रैः पाटितानांविदारितानामंभोधराणांमेघानामंत्राणीवविद्युतां
कैतवेनमिषेणवहिर्निरगुर्निःसृतानीत्यर्थः॥ इंद्रजालंमंत्रशक्तिः॥ पंचाशुगोरविंदमशोकंचचूतंचनवमल्लिका॥ नीलोत्पलंचपंचैते
पंचबाणस्यसायकाइत्युक्तबाणपंचकस्याकाम[illegible] सएवमायिकोमायाप्रधानामंत्रप्रयोक्तेतियावत्॥ व्योम्निगगनएवप्रांगणसीम्निचत्व
र्येसांध्यकिरणंसंध्याकालीनंकिंचिल्लोहि[illegible]किरणंविरलतयाक्वचिद्दृश्यंतदेवचेलांचलमाच्छादकंकंथारूपंविस्तार्यप्रसार्य

यस्यप्रौढप्रतापोद्भटविकटसटाकोटिभिः पाटितानामंत्राण्यंभोधराणांबहिरिवनिरगुर्विद्युतांकैतवेन॥ इंद्रजालंय
था॥ व्योम्निप्रांगणसीम्निसांध्यकिरणंविस्तार्यचेलांचलंध्वांतैः कार्मणपांशुभिस्त्रिजगतीनेत्राणिसंमोहयन्॥ तारा
शौक्तिकमौक्तिकानिविहगश्रेणीरवच्छद्मना झिंझीकृत्यबहिः करोतिवदनात्संचाशुगोमायिकः॥ ॥इतिविभावनिरूप
णंनामद्वितीयस्तरंगः॥ अथानुभावानिरूप्यंते॥

ध्वां[illegible]स्तमोभिरेवकार्मणपांशुभिर्दृष्टिबंधार्थेविकीर्णधूलिभिः कृत्वात्रिजगती
नेत्राणित्रिलोकीवासिनयनानिसंमोहयन्तत्त्वावगमापटूनिकुर्वन्विहगा[illegible]विहायसागच्छतांपक्षिणांसमुदायस्यसंघस्यशब्दव्याजेनझिं
झीकृत्यझिंझीतिमायिकशब्दानुकरणंमायिकशब्दमुच्चार्येत्यर्थः॥ ताराशौक्तिकमौक्तिकानिताराएवस्वच्छत्वाच्छौक्तिकमौक्तिकानिशुक्ति
संभूतमौक्तिकानिनतुगजमौक्तिकानितेषांपाटलत्वाद्वदनान्मुखाद्बहिःकरोतिमंत्रशक्तिप्रभावतयालोकान्प्रदर्शयतीत्यर्थः॥ ॥इतिश्रीजडरू
पनामकगंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांद्वितीयस्तरंगः॥ ॥तथैवानुभावनिरूपणंप्रतिजानीते॥ ननुविभावेनापिसाध्य

र·न· ज्ञानद्वारास्थायिभावजनकत्वस्यापितत्रसर्वसंमतत्वात्स्थायिभावानुमितिजनकज्ञानविषयत्वस्याप्युक्तरीत्यातत्रसंभवादत आह॥अनुभा नौका
२० वकतानुभवजनकता॥प्रकृतेविवक्षितेतिशेषः॥व्यापारवत्कारणत्वंकरणत्वंतच्चज्ञानद्वारकेतत्रास्त्येवेत्यत आह॥ननुफलेनकदाचिदयोगो
ऽनुभावेप्यस्तिनह्यनुभावज्ञानमात्रंचरमकारणंसर्वदाफलायोगस्तुविभावेपिनास्तीत्यतिव्याप्तिस्तदवस्थैव।मैवं॥व्याप्तिपक्षधर्मत्वावगाहिय
द्विषयकयथार्थज्ञानसामान्यमव्यवहितपूर्ववत्त्वसंबंधेनरसानुगुणानुमित्युपहितंतत्त्वमेवानेनविवक्षितं॥तादात्म्येनव्याप्यनंगीकाराच्चना
लंबनविभावेतिव्याप्तिः॥यथार्थपदेनचोद्दीपविभाववारणं॥प्रतिबंधकासमानकालिकत्वस्यज्ञानसामान्यविशेषणत्वाच्चानुभावेनाव्याप्तिः
विभावानुभावविषयसमूहालंबनस्याप्यनुभावेव्याप्तिपक्षधर्मतांशेयथार्थत्वाद्विभावेतिव्याप्तिवारणायसामान्यपदं॥किंचिद्विवज्ञानसामा

येरसाननुभावयंत्यनुभवगोचरतांनयंतितेनुभावाः कटाक्षादयः॥करणत्वेनचानुभावकता॥करणत्वंचफलायोगव्य
वच्छिन्नकारणत्वं॥

न्यमनुभावसमूहालंबनात्मकमेवेतितुनास्तियेनतादृशविभावेतिव्याप्तिःस्यात्॥एवमपितद्युक्तित्वादावालंब
नगतेतिव्याप्त्यारसानुगुणेत्यनुमितिविशेषणमित्यास्तांतावत्॥इदंचदोषविशेषमहिम्नास्वात्मनिशकुंतलाविषयकरतिमदुष्यंताभेदाव
गाहीकाव्यार्थभावनाजन्माविलक्षणविषयताशालीबोधोरसइतिवक्ष्यमाणमताभिप्रायेणानुभावलक्षणंपरिष्कृतं॥तदेतदप्यभिप्रे
त्यैवोक्तंकथंज्ञानमिति॥यथाचैतन्मतेनुभावलिंगकस्याप्यनुमितेरसपूर्वसत्तायाआवश्यकत्वंतथातत्रैवप्रपंचयिष्यतइतिबोध्यं॥वस्तु
तस्त्वनुपश्चाद्भवंतीतिव्युत्पत्त्यावच्छेदकतासमवायान्यतरसंबंधावच्छिन्नस्थायिभावनिष्ठकारणतानिरूपितसमवायसंबंधावच्छिन्नकार्यत्व रामः
मनुभावसामान्यलक्षणंबोध्यं॥नव्यास्तुतावदन्यान्यत्वमनुभावव्यवहारविषयत्वंसंकेतसंबंधेनानुभावपदवत्त्वंवातल्लक्षणमेषामितिरेवान्य २०

भाव्यमानविभावस्यैव रसत्वेन तस्य च प्रत्यक्षसिद्धत्वादित्याशयः॥ विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति सूत्रे मिलितानां त्रयाणामुपादानान्न प्रत्येकं तेषां मध्ये कस्यापि रसत्वमिति सिद्धान्ताभिप्रायेण समाधत्ते॥ कथं ज्ञानमिति॥ बालस्य रसाभिव्यक्तेरभावेन लिंगजलैंगिकबुद्धेर्वासनाद्वारा रसाभिव्यक्तावुपयोगित्वादिति वक्ष्यते॥ चंद्रादिवत्कटाक्षादीनामपि मनोविकृत्युत्कर्षकत्वस्यादोरस्त्वाभवेन्नारोपमान्यश्चात्तदिंगितैरित्यादिना शृंगारतिलकादावभिधानादनुभवसिद्धत्वाच्च विभावत्वमेव युक्तमित्याशंकते॥ स्वानुभवप्राची

ननु रसे कथमनुभावकापेक्षेति चेत्॥ यतः स्थायिभावः परिपूर्णो रसस्तस्य चांतरत्वाज्ज्ञापकेन विना कथं ज्ञानमित्यनुभावकस्यापेक्षणीयत्वात्॥ ननु कटाक्षादयः कथमुद्दीपनविभावा न भवंति इह कटाक्षादौ कामिनो मनोविकारः परिपूर्णो भवत्यनुभवसिद्धत्वेनापह्नोतुमशक्यत्वात्॥ किंच प्राचीनसंमतिरपि॥ ईषद्वक्रितपक्ष्मपंक्तिभिरनाकूतस्मितैर्वीक्षितैर्नेत्रेवतवायं सुंदरि करक्रोडे जगद्वर्तते॥ अंतः पांशुलहेमकेतकदलद्रोणीदुरापश्रियो दोर्मूलस्य विभावनादिह पुनः क्रूरे किमाकांक्षसीत्यादिरिति चेत्॥

नानुभवसंवादेन प्रमाणयति॥ हे सुंदर्यनवद्यांगि॥ ईषदित्यादि॥ किंचिद्वलितानां नेत्रपत्राणां श्रेणीभिरनाकूतस्मितैः किंचिदाकूतगर्भितहास्यैर्नेत्रोत्सार्थत्वाद्दोहितैर्वीक्षणैर्नपुंसके भावे क्त इत्यनुशासनादेतैरेव नानापायसाधनैस्तवायं संप्रति करक्रोडे हस्तपंजरे जगद्रसिकः पुरुषो वर्तते त्वदायत्तं भवतीति भावः॥ हे क्रूरे किंचित्कालवियोगमात्रेणैवातिशयितसंतापाधायिनी हे तिमयीत्यर्थो नत्वित्याद्यभ्यंतरे धूलिधूसरं हेमकेतकमित्यभूतोपमा निरुपमत्वद्योतनाय॥ यद्वा हेमकेतकं गंधफली॥ वस्तुतो हेमकेतकमिति पंक्तिरथपदन्यायेन स्वर्णकेतकमिति प्रसिद्धं विजातीयमेव केतकमत्राभिधित्सितमिति बोध्यं॥ तस्माद्दलद्रोणीद्रोण्याकारं दलं तया दुरापाश

र०त० कटाक्षादनाश्रीः शोभा यस्य तादृशस्य दोर्मूलस्य कक्षाया विभावनात् दर्शनाच्चलसंस्थापनव्याजेन प्रकाशनात्पुनरधिकं किमाकांक्षसि सिसाध नौका
२१ यिषसि साध्यांतरानालोचनादिति भावः॥ स्वव्यधिकरणरसपरिपोषकतयोद्दीपनविभावानामपि कटाक्षादीनां स्वसमानाधिकरणरसानु
मापकत्वादनुभावंतापि संभवतीत्यभिप्रायेण लक्षणद्वयं योजयन्निष्टापत्त्या समाधत्ते॥ करणत्वेनेति॥ व्याप्तिप्रकारकपक्षधर्मताज्ञा
नविषयत्वेनेत्यर्थः॥ विषयत्वेनेति॥ प्रकृष्टरसजनकज्ञानविषयत्वेनेत्यर्थः इतीति पर्यवसन्नमित्यर्थः॥ तदप्युक्तमनुभवरसिकैः॥ ग
र्जति वारिदपटले वर्षति नयनारविंदमबलायाः॥ भुजवल्लिमूलसेके विरहलता पल्लवं सूते इति॥ अत्राबलाया विरहं प्रति वारिद

सत्वं॥ कटाक्षादीनां करणत्वेनानुभावत्वं विषयत्वेनोद्दीपनविभावत्वं॥ तथा च नायिकात्मनिरसावभासकत्वेन नायिकां प्रति
कटाक्षादयोऽनुभावास्ते च दृष्टिगोचरीभूताः कामिनो मनोविकारं कारयंतो विषयत्वेनोद्दीपनविभावा इति॥ स चानुभावः कायि
कमानसाहार्यसात्विकभेदाच्चतुर्धा॥ कायिका भुजाक्षेपादयो मानसाः प्रमोदादयो नाट्ये चतुर्भुजत्वज्ञानमाहार्यः सात्विका रोमा
चादयः॥ 
टलगर्जनस्यैव तत्कामुकस्य विरहं प्रति तस्या भुजवल्लिमूलसेकस्य पूर्वोद्दीतां प्रत्यनुभावतया पानस्याप्युद्दीपकत्वमभिमतमि
ति संक्षिप्तदर्शां परामर्शः॥ तं विभजते॥ उदाहरति॥ विकारत्वाल्लिंगिताच्चरमभेदाद्दिकारत्वानालिंगितत्वादस्य पृथग्भेदत्वेत्यभिप्रेत्याह भुजाक्षेप
दयइत्यादि॥ प्रमोदादयइति॥ यथा चांतरस्याप्यनुभावत्वं तथाग्रे ग्रंथकृदेव स्फुटयिष्यति॥ चतुर्भुजत्वज्ञानमिति॥ चतुर्भुजत्वारोप इत्यर्थः॥ लो
कप्रसिद्धबुद्धि चतुष्कवैलक्षण्यमेवास्य द्वितीयभेदवैलक्षण्यबीजमिति दर्शयितुं नाट्यइत्युक्तं॥ यत्तु चतुर्भुजत्वमेवाहार्योऽनुभावो ज्ञानमिति राम:
तु ज्ञायमानस्यैव गमकत्वाभिप्रायेणेति केचिदुक्तं॥ तत्सकलग्रंथविरोधादुपपत्तिविरोधाद्ग्रंथकृतोनभिप्रेतत्वाच्चानादेयं॥ तथाहि ॥ ॥ २१
४= तथा च भुजवल्लीत्यत्राबलाया इत्यनुषंगं विरहलतेत्यत्रास्माकमित्यध्याहारं च पश्यतामित्यर्थः

कारणान्यथकार्याणिसहकारीणि यानि च॥रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥विभावा अनुभावास्तत्कथ्यंते व्यभिचारिण इत्यालंका
रिकैः सर्वैरभ्यधायि न च चतुर्भुजत्वस्य तत्कार्यत्वं॥चतुर्मुखत्वमिव सरस्वतीं दिदृक्षोर्विधेरिव लक्ष्मीमालिलिंगिषोर्विष्णोश्चतुर्भुजत्वं प्रत्यापयं
त्यागममूलास्यतिरुपलभ्यते किं येन श्रद्धीमहि॥पच्यत्तायमानस्य गमकत्वमुक्तमायुष्मतानत्वत्रपसरति विवेक्तव्यं न तावच्चतुर्भु
जे देवे देवदत्तत्वादिलिंगकानुमिते विरसानन्तुगुणत्वापातात्॥न तावन्नायिकादौ दृष्टविपक्षाद्रतिलालसश्वरतिचित्तभ्रमविषयस्याप्य
नुभावत्वे विभावत्वात्थालंदुर्वारं तल्लक्षणे यथार्थपदपरित्यागस्य सहस्तितत्वात्॥सोयमुपपत्तिविरोधः॥ग्रंथकृता रसमंजर्यां सखीपरि

शृंगारस्यानुभावाः॥तत्र भरतः॥नयनवदनप्रसादैः स्मितमधुरवचःप्रमोदैश्च॥विविधैरंगविकारैस्तस्याभिनयः प्रयोक्त
व्यः॥कटाक्षभुजक्षेपादय ऊहनीयाः॥यथा॥मुक्ताहारस्तनकलशयोः कर्णयोः कर्णिकारं मौलौ मालापरिभवभयाद्
र एव न्यवारि॥दृष्टे भीष्टे समजनि पुनः सुभ्रुवो भूषणाय प्रातर्वातोत्तरलकमलद्रोहदक्षः कटाक्षः॥ हासउदाहृतः॥आगा

रभित्तिलिखितासु निवेदयत्सकः सप्रमोदशासु मूर्तिषु लोकभर्तुः॥इत्थं सखीजनवचः प्रतिपद्य सद्यः सीता स्मितद्युतिभिरुत्तरयांच
कारेति॥तत्र सीता याश्चित्रे रामारोपं विजानती सखीतेनेत्रारोपेण रतिमनुमाय सादरावलोकनाशयोत्तात इति वक्तुं एकु ति सीताप्यनु
कस्तत्वार्थोत्तात इति हसतीत्यर्थः॥अन्यथा वेदग्ध्यहान्यापत्तेस्तस्माद्यथास्थितमेव ज्यायः॥विविधैरंगविकारैश्च भ्रुवनयाञ्चाबोधको
क्षेपयकुंचनप्रभृतिभिः सात्विकभावैश्च॥प्रातरित्यादि॥ईषद्विकसितत्वादितरजनभीत्या चंचलत्वाच्च सूर्योदयकालिकस्य वातचंच
लस्य कमलस्य द्रोहे दक्षः समर्थः सदृश इति यावत्कटाक्षः पुनः कटाक्ष एवाभीष्टेप्रियनमेदृष्टे सति सुभ्रुवो भूषणाय सर्वातिशयमाधानुंस

एवकारव्यवच्छेद्यमुपपादयति मुक्तेत्यादिना॥ स्तनावेव कलशौ रत्नसुद्रेको नु तस्य तत्तयोर्मुक्ताहारः कर्णयोः कर्णिकारं पुष्पं मौलौ धम्मिल्ले
मालास्त्वक्परिभवभयान्मालिन्यसंभावनायाउद्वेगाहूादेरेवत्वन्यथा रित्यक्तेत्यर्थः॥ हास्यं मुखविकासं यस्माज्जनयेत्तस्मादेव हेतोर्हास्य
पदवाच्यो रसो विकृताकारैर्वाक्यैर्लुप्तगद्गदाक्षरैरंगविकारैः शैथिल्यादिभिर्विकृतवेषैर्वदनैर्लोहित्यादिभिर्ज्ञेयोऽनुमेयः॥ मंदस्मीषद्धसं
स्यविकसदास्यपातयापार्वत्याशिशौ गजास्ये षडास्येवा किंचिद्दिति॥ ईषन्निमीलन्नयनप्रान्तरचनावक्रा दृष्टिश्चक्षुः समारोपितास्यापि
तं॥ कीदृशे शिशौ॥ इदं स्वसमीपवृत्ति शिवाविनाभूत॥ इदं च लिंगविपरिणामेन मणिकलयोरप्यन्वेति॥ कपालमंडलं मंडलाकारं कपा

हास्यस्यानुभावाः॥ तत्र भरतः॥ विकृताकारैर्वाक्यैरंगविकारैश्च विकृतवेषैश्च॥ हास्यं जनयेद्यस्मात्तस्माज्ज्ञेयो रसो हास्यः
॥ आस्याधरविवरणकपोलस्पंददृष्ट्याकुंचनादय ऊहनीयाः॥ यथा॥ पात्रीकृत्य कपालमंडलमिदं पीयूषभानोः कलां वर्ती
कृत्य फणामणिं फणिपतेः संपाद्य तस्मिन्शिखां॥ सायंदीपविधिं वितन्वति शिशौ मंदं हसंत्या तया किंचित्कुंचदपांगभंगकुटिला
दृष्टिः समारोपिता॥

लं पात्रीकृत्य शरावः शरावः संपद्यते तथा कृत्वेति पात्रीकृत्य तस्मिन्पीयूषभानोश्चंद्रस्य कलां॥ वर्तीकृत्येत्यपि
प्राग्वत्॥ तस्यां फणिपतेः फणामणिमेव शिखां दीपकलिकां संपाद्य सायंसंध्याकाले दीपविधिं दीपोद्योजनप्रकारं वितन्वति प्रकाशयतीत्यर्थः
॥ यत्तु तया यशोदयेत्यर्थयित्वा तच्छब्दस्य प्रकृतार्थबोधकत्वयुक्तिरूपोद्बलकतया पन्यस्ता॥ तत्र विवदंते बहवः कुतो ज्ञापकेन यशोदायाः
प्रकृतत्वं निरणायि॥ श्रीकृष्णस्य मंगलाचरणे मुख्यतया निर्देशादिति चेत्॥ अत्र पार्वत्यर्थकतया तत्पदं केपि मामंसतेति यशोदापरतया प्रकृ
तपदं व्याचक्षाणेन भवता यत्प्रागुदाहृते प्राणस्य प्रतिमूर्तिरिति पद्ये पितत्पदं यशोदापरतया तद्योग्यता संपत्तये च ममेति नंदपरतया नम्रा

तत्रपार्वतीतात्पर्यग्राहकाभावान्नार्थान्तरप्रसक्तिरितितेननतथाव्याख्यातमितिवचनंपुनरन्यतात्पर्यग्राहकेदृढतरेजाग्रतितथास्वविवक्षि
तार्थतात्पर्यग्राहकमनुपन्यस्यस्वविवक्षितार्थपरत्वेनतत्पदव्याख्यानवतोऽतात्पर्यविषयार्थख्यापकत्वमभिमंजयदुराग्रहमेवानुरण
नयति॥तद्वाक्यमुख्यंतथानिर्देशस्तुतद्वाक्यंगिलेगमकानवाक्यान्तरे॥नापिनैषधादाविवप्रबंधमहातात्पर्यंश्रीकृष्णेतिसकलश्लोका
नामुदाहरणमात्रपरत्वात्॥तस्मात्कृष्णस्यैववाक्यतात्पर्यविषयत्वंदुर्लभंप्रागेवतुयशोदायाः॥अत्रापिरसेमहातात्पर्यंरसस्यश्रीकृष्णा
त्मारसोवैसइतिश्रुतेरितिचेत्॥ॐ॥रसत्वेनतात्पर्यविषयत्वेकथंयशोदायास्तथात्वं॥रसचर्वणाविभावकत्वसाधर्म्यादितिचेत्॥वस्तु

करुणस्यानुभावाः॥तत्रभरतः॥श्वसनैरुदितैर्मोहैःप्रलापपरिदेवनप्रलयैः॥अभिनेयःकरुणरसोदेहाघातादिभिश्चै
व॥मुखशोषणवैवर्ण्यादयऊहनीयाः॥यथा॥ताततिर्गच्छतिगणपतौनाकमयापितस्यावाचांदेव्यास्त्यजतिशिथिलंकं
कणंनैवदोस्मोः॥

मात्रस्यैवविभावानुभावव्यभिचार्यन्यतमत्वेनतथात्वमविशिष्टमेवेतिविरमत्वायुष्मानिति॥तदपरेनक्षमंते॥दृग्गो
चरेयशोदायागोविंदस्यशिवःस्वयं॥निवसन्गोकुलेतत्रपालयामासतंविभुमितिपुराणात्तदभिमतेदंपदादिसमभिव्याहाररूपगम
कस्यापिसाधारण्यादुभयतात्पर्येपिसामंजस्यंतत्पदस्यसंभवतीत्यलमप्रकृतेन॥पुराणमनालोचयतांद्राग्बुद्ध्यपारूढःपुराणालो
चनोत्तरमप्यबाध्यमानःसर्वेषामविप्रतिपन्नोऽर्थस्तत्पदार्थःसाधारणयशोदापरत्वगमकानालोचनेनपार्वतीरूपतयैवपर्यवस्य
न्नसतिबलवत्तरबाधकेदुरपन्हवएवेतियुक्तमुत्पश्यामः॥मोहोविपरीतमतिकार्यं॥प्रलापोऽसंबद्धार्थकोक्तिः॥परिदेवनंदुःखक
था॥प्रलयोनवभासकार्यं॥अत्रगणपतौगणपतिनामकेतातेपितरिनाकंस्वर्गंनिर्गच्छतिसतितस्याःपतिव्रतायावाचांदेव्याः॥

इदं च स्वबोध्यवाचकसरस्वतीपदवाच्यत्वरूपपरंपरासंबंधात्मकलक्षितलक्षणयाकविमात्रर्थकं॥ यथा॥ अद्यापि तिष्ठति दृशोरि
दमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते॥ वाचं निशम्य नयनं नयनं ममेति किंचित्तदा यदकरोत्स्मितमायताक्षी॥ अत्र ममनयनं नयन
मिति वाचमर्थात्तदीयां निशम्य स्तनतटात्पतितमुत्तरीयं धर्तुं प्रवृत्ते सति मयीति योग्यतावशाल्लभ्यते तदा यदिति क्रियाविशेषणं आयता
क्षी स्मितमकरोदिदमद्यापि दृशोरत्रापि ममेत्यनुषज्यते पुरस्तिष्ठतीत्यर्थेन नयनपदेन स्ववाच्यचक्षुर्वाचकनेत्रपदवाच्यवस्त्रमुच्यते॥ केचि
त्तु प्रवृत्तेति प्रथमांतं पाठं कल्पयंतः स्तनतटात्पतितमुत्तरीयं धर्तुं यथास्थानं प्रापयितुं प्रवृत्ता यताक्षी मम नयनं नयनमिति मम वाचं पयो
धरप्रविष्टमदीयचक्षुः पयोधरपिधानेन पिहितं माकुर्वित्यर्थिकां निशम्य यत्स्मितमकरोदिदं मम दृशोः पुरस्तिष्ठतीति वाक्यार्थं वर्णयंति।

अद्याप्यार्द्रीभवति कुचयोर्नापि पाटीरपंको नेत्रे निर्यत्पयसि न पुनः कज्जलं स्थैर्यमेति॥

नयनपदं मुख्यार्थपरतयैव तत्र योजयंति॥ दृश्यंते चैवंविधानि बहून्युदाहरणानि॥ यथा मम॥ तुर्वरिपुशिरःपयोजैर्नदीगतैर्वायुकृत्तनि
जनालैः॥ बाणप्रपीतरुधिरैः किमनंतः पद्मनाभोभूत्॥ अत्र वाहिन्याशुगशिलीमुखपदपर्यायेन नदीवायुबाणशब्दैः सेनाशरभ्रमरा
विवक्षिताः॥ बाणप्रपीतरुधिरैरित्यनेन कृतनोत्तरमपि बाणसंबंधबोधकेन जयद्रथशिरसद्वोदधिपर्यंतप्रापणद्वारार्जुनोपमाध्व
न्यते॥ तथा मधुपदपर्यायस्य रसपदस्य पर्यायेण कीलालपदेन समानार्थकरुधिरपदलक्षितलक्षणायाः परंपरासंबंधः स्ववाच्यवा
चककीलालपदवाच्यवाचकरसपदवाच्यवाचकमधुपदवाच्यत्वमित्यन्येनुसरणीः॥ एवं क्वचित्स्वघटकपूर्वपदवाच्यवाचकपदपूर्व
पदकस्वघटकोत्तरपदघटितसमुदायवाच्यत्वमपि लक्षणायाः परंपरासंबंधो दृश्यते यथा पंक्तिरथपदस्य दशरथादावित्येषैकादि

दोर्लतोर्हस्तयोः कंकणमय्यापि पत्रादेर्देयत्वनिश्चयेपि शिथिलं सत्तेन पत्रादिविषयाचिंताद्योतितानत्यजतिनमुंचत्यर्थान्दृस्तमितिल
भ्यते तेनाखंडितसौभाग्यमुद्वीर्णं॥ तथा नस्याः कुचयोः पाटीरपंकः सतीभूषणाय कल्पितश्चंदनद्रवोप्यापितत्कालनिर्वर्तितोपि नाद्रीभव
तितात्कालिकपत्रादिदुःखविमर्शसंजातदुःखज्वरेण शुष्यतीत्यर्थः॥ निर्यत्स्य पस्य नेन पत्रादिक्लेशप्रसत्यनाद्योतितानेत्रे वसुषिपुनरि
तित्वर्थकज्जलं स्थैर्येनैति प्राप्नोत्यश्रुसरस्रुतत्वादित्यर्थः॥ नचैवमालंबनस्य पत्रादेरनुक्तत्वात्कथं रसप्रतीतिरिति वाच्यं॥ अनुपदं वक्ष्यमाण
ये यद्यप्युदाहरणद्वयेप्यत्वादिति कश्चिद्विवृणुते॥ तत्काव्यनिदामनादरणीयमेव॥ नहि मौवदालंबनो मृतनिष्ठः शोकः कैश्चिदभ्युपगतः॥
एतेन सहगमनाध्यवहितप्राक्कालीनोयं वृत्तांतस्तथा च भर्त्रालंबनो भार्यानिष्ठः स इति प्रजल्पंतोपि निरस्ताः॥ असामंजस्यात्॥ अत एव निर्य
त्स्य पस्मिन्नेत्रेस्यपि नाद्रीभवतीति योजनायां तथाः निर्यत्स्य पसौत्यकारं प्रक्षिप्यतत्सोप्यहर्षपोषिकानस्त्राकुर्वीत्यर्थैवान्यथैवसामंजस्या
न्याहि॥ गणपतौ तातेअत्रभर्तेगीत्युक्ते वक्ष्यमाणलक्षणलक्षितः स्वनिष्ठः शोकोनुचित एव प्रतीयेतेतितातद्द्युक्तं॥ तेन च वक्ष्यमाणल
क्षणलक्षितः कविमात्रगतः परनिष्ठः शोकः कविगतप्रधानीभूतस्वनिष्ठकरुणांगतयैवप्रतीयतामिति नानौचित्यमिति सूचितं॥ नार्कं निर्ग
च्छतिवर्तमानार्थककृत्समभिव्याहृत न सतिसप्तम्यर्थनिर्गमसमानकालीनत्वं शोच्यत्वकल्पनं नियाणप्रवृत्तेति तस्यावावादेव्याः सरस्वत्याः
॥ एतेनालंबनविभावः प्रदर्शितः दोर्लताहस्तयोः शिथिलमिति॥ इदं च तत्ताख्यानपरं सच्छब्दशक्तिमूलानुरणनव्यापारेणोत्कंठितोत्कंठा
पूरणमथरमित्यर्थमावेदयत्सर्वदावश्यंभाविस्वगोचरस्मृतिरूपव्यापारघटनयास्वसमभिव्याहृतेन नैव त्यजतीत्यनेन गम्यस्य स्वस
मास्त्रिष्टापरित्यागनियमरूपस्य लोकोत्तरनदीयकंकणस्वभावस्य त्यंगेषमात्रस्मरणरूपव्यभिचारिभावसाहाय्यमाचरति॥ कंकणमय्या
पिन्हृकान्नेत्यनीतेपि नैव त्यजति मामित्यार्थिकं॥ मामित्यध्याहृतकर्मविशेषणमवशिथिलमिति निमंदस्नेहमित्यर्थकमित्यन्ये॥ एवं तस्याः

र॰त॰ कुचयोः पाटीरपंकोप्यापि मयि दुस्तरविपद्दिपन्नप्रायेपि सति नार्द्रीभवति न प्रसीदति पुनर्दर्शनपथं नायातीति भावः॥नार्द्रीभवतीत्यंतवाक्ये नौका
२४ नपाटीरपंकस्याद्रत्वमुचितमित्यर्थशक्त्यागम्यते तेन च मातुरेवं दुःस्थेपि पुत्रे प्रसादः समुचित इत्यर्थो नार्द्रीभवतीति पदशक्त्या द्योत्य
ते तेन चार्थशक्त्यापि न प्रसीदतीति तद्विषये आर्द्रताभिव्यज्यते॥तथा नेत्रे निर्दयस्य यस्य मद्विषयकवात्सल्यसंभूताश्रुणि यदा
कदाचिदपि सति॥एतदभिप्रेत्यैवाद्यापीत्यत्र नावर्तितं कज्जलं जडत्वाल्लोकतः सुभगापाविहितत्वाच्च शास्त्रतोपि पुत्रस्य मपुनरि
ति कैमुतिकन्यायं द्योतयति॥ममतु पयो निर्याणनिदानकलनसमकालसमुचितप्राणनिर्याणस्य प्राणिनो द्यापि कुतः स्थेमेति॥ए
तेनोद्दीपनविभाव उक्तः॥स्थैर्यं नेति॥अत्रैतीत्यनेनापरोक्षवन्निर्देशेन मोहकृतविपरीतमतिकार्यमावेदितमिति॥मम॥गतमपरिहा

रौद्रस्यानुभावाः॥तत्र भरतः॥नानाप्रहरणसंकुलशिरःप्रकंपैः कराग्रनिष्पेषैः॥घोरैरर्थविशेषैस्तस्याभिनयः प्रयोक्त
व्यः॥भ्रुकुटिदंतोष्ठपीडनादय ऊहनीयाः॥यथा॥ययेभीमेन बद्धभ्रुकुटिघनरवं दंतनिष्पीडितोष्ठं विक्षिप्ताग्र्याम्नि विंध्या
चलचटुलचमत्कारभाजः करींद्राः॥तेषामेषां कपोलादिव भयविधुता काविदुड्डीय लग्ना बिंबे पीयूषभानोर्मधुकरपटली लांछ
नस्यच्छलेन॥ येमर्थे किं त्वमशोचस्त्यजत्सजन्यसनं॥त्वामनुसीदति बंधावार्द्रीभावं भज भज च स्थैर्यमिति समाधिरत्नप्रतिमातृवत्सल
स्य कवेर्वात्सल्योक्तिरियमित्यन्यैरपरिशीलितासरणिः॥नानाप्रहरणसंकुलः संग्रामः॥प्रकंपो घूर्णनं॥अर्थविशेष उद्धतकर्म॥भीमेन यु राम:
यकरींद्रा दुर्योधनसेनामत्तमातंगाः विंध्यत्यादि॥विंध्यनामकगिरेः क्षणिकमत्युच्चैः प्रपतने भजनतः संततः स्तिमितभूलतं निबिडध्वनिदं २४
तदृष्टाधरं यथास्यात्तथा याविक्षिप्तास्तेषां कपोलाद्गंडाद्भयविधुता भयकंपितोड्डीयोत्प्लुत्य लांछनस्यच्छलेन मिषेणामृतद्युतेर्मंडले लग्ना

काचित्पुनर्भयभीते षाध्यसाभ्रमरपंक्तिरिवेयुत्प्रेक्षा॥अत्रदुर्योधनआलंबनंसचगम्यएवरसस्यवर्णाहेतुरितिस्पष्टंतत्त्वं॥शौर्यैः[illegible]
भिः॥वीर्यैर्बलविशेषैः॥पराक्रमःपरबधनादिः॥प्रभावोमारणादिः॥आक्षेपस्तिरस्कारः॥विस्मृत्यशंकते॥गूढाभिसंधिःसमाधृत्ते॥
आशयमुद्बुद्धस्मारयति॥चतुर्विधइतिप्रागुक्तइतिशेषः॥सचेति॥मानसस्त्वित्यर्थः॥ज्ञायमानएवेति॥नतुसाक्षात्क्रियमाणइत्यर्थः॥ग

वीरस्यानुभावाः॥तत्रभरतः॥धैर्यैःशौर्यैर्वीर्यैरुत्साहपराक्रमप्रभावैश्च॥वाक्यैराक्षेपकृतैर्वीररसःसम्यगभिनेयः॥नन्वेतौ
द्विपस्यरसस्यज्ञापकाःशरीरधर्माभवितुमर्हंतितएवसर्वत्रोक्तास्तथाचधैर्योत्साहौनशरीरधर्माविति चेत्॥सत्यंधैर्यपदेन
चाञ्चल्याभावउत्साहपदेनाश्रुपुलकादयोलक्षिताः॥यद्वानुभावश्चतुर्विधस्तत्रमानसोप्यनुभावउक्तस्सचज्ञायमानएवमेम
कःसचमानसऐंद्रियकश्चेतिनविशेषः॥विनयबलादयऊहनीयाः॥युद्धवीरानुभावोयथा॥अग्रेवासवजित्समग्रसमरव्या
पारदीक्षागुरुःपार्श्वेतस्यविपक्षपक्षदलनक्रीडाधनोरावणः॥इत्थंजल्पतिसर्वतःपरिजनेसंध्यास्मृतिंकुर्वतःश्रीरामस्यन
कुंभकस्यपवनेसुस्मःसकोपिक्रमः॥

मकइति॥यतइतिशेषः॥सचेति॥ज्ञायमानोप्यनुभावइत्यर्थः॥मानसइतिलैंगिकोवेत्यपिबोध्यं॥
नविशेषइति॥गंमकत्वेशारीरत्वस्याप्रयोजकत्वात्तदघटितयथाश्रुतलक्षणस्यतत्रापिसंभवात्॥समग्रस्यसमरव्यापारस्यदीक्षाया
मन्यप्रत्युपदेशनेगुरुःपटीयान्वासवजिदिंद्रजिदग्रेतिष्ठतीतिशेषः॥सेनाग्रणीर्भवतीतिभावः॥तस्येंद्रजितःपार्श्वे॥विपक्षेत्यादि॥श
त्रुभटानांदलनंखंडनमेवक्रीडानायाससंपन्नंप्रियंतदेवधनमवश्यसंग्राह्यंयस्येदृशोरावणस्तिष्ठतीत्यत्रापिशेषोबोध्यः॥इत्थममुनाप्र
कारेणसर्वतश्चतुर्दिक्षुपरिजनेवानरसमुदायेजल्पतिवदतिसतिसंध्यास्मृतिंसंध्यावंदनंकुर्वतआचरतःश्रीरामस्यकुंभकस्यपूरककुंभक

र·त· यद्वाकुंभकादिशब्दाःक्रियाविशेषविशिष्टवाच्यर्थकास्तथाचतन्नामकेपवनेवायावभेदेषष्ठीनचाभेदोनसंबंधइतिप्राचांप्रवादा नौका
२५ त्कथंशेषषष्ठ्यवसरइतिवाच्यं॥नसंबंधइत्यस्यसरूपयोराकांक्षितइत्यादिपूरितार्थतात्पर्यादतएवावयवावयविभावेनान्वयप्र
तियोगिनावैरूप्यंसमर्थितंभगवतामहाभाष्यकृताराहोःशिरइत्यत्र॥सक्रमोयथोक्तरीतिरूपःकोपीषदपिनक्षुण्णानविघ्नितः॥एने
नचांचल्याभावउक्तः॥हेकौत्समृद्राजनंमार्तिकंपात्रंसंवीक्ष्यविचारपूर्वकंदृष्ट्वादास्यंवैतृष्ण्यंनविधेहिमाकुरुयद्वान्मदीयादित्यादिनेग
च्छमागाःकिंत्वेतदखिलंसम्पत्तीनविचारणीयमितिभवंतंक्षणमित्यनुष्ठयशीघ्रंगमयतिपाचेवेद्ययहंदासःकिंकरोस्मिनिश्चितंचेद्व

दानवीरानुभावोयथा॥औदास्यंनविधेहिगच्छनगृहात्संवीक्ष्यमृद्राजनंयाचेकिंतुभवंतमेतदखिलंकौत्सक्षणंसम्पत्तां
॥दासश्चेदहमस्मिचेद्सुमतीसर्वैवसागृह्यतांस्वर्णंचेद्गुरुदक्षिणाधनपतेरानीयसंपाद्यते॥दयावीरानुभावोयथा॥ध्वां
तस्तोमधरेजगद्भयकरेपाथोधरेवर्षतिक्रोशद्व्याकुलवत्सगोकुलदयादीनेक्षणःकेशवः॥हस्तेन्यस्तमहीधरश्च्युतिभयान्न
वांगुलीपल्लवैःस्रस्तंवेणुमुरीकरोतिनतनाःस्रस्तंहरत्यंशुकं॥ सुमतींरोचयेस्तर्हिसर्वैवसागृह्यतांफललाभस्तवैवास्तुचेत्स्व
र्णंरोचयेस्तर्हिगुरुदक्षिणाधनपतेःकुबेरादानीयाहृत्यसंपाद्यतेमयेत्यर्थः॥दीयतइत्यनुक्त्वापदेयंविविधसौष्ठवेनाभिधानंतन्मयासं
पादितेत्यर्थः।र्थिनांसाकूत्यमस्त्यवेत्यर्थमभिव्यंजयदुत्साहंपुष्णाति॥गाढांधकारसमूहधारकेतएवजगद्भयकरेपाथोधरेजलधरेव
र्षतिसतिक्रोशदिति॥हंबारवकरव्याकुलेभयभीतेनवत्सानांतदतिरिक्तगवांचकेचित्तुक्रोशंतोःतएवव्याकुलास्तथावगतावत्सायासां रामः
तासांगवामितिविक्लिष्टः क्रोडव्याकुलेतिकाचित्कःपाठोयुक्ततरस्तत्रक्रोडभुजांतरेव्याकुलावत्सायासामितिगवांविशेषणस्याद्विप २५

नातिशयार्थत्वादित्यवधेयं कुलेसमुदायेदयया कृपयादीनं तत्वाभिव्यंजनचतुरमीक्षणं चक्षुर्यस्य तादृशः केशवो हसतीति॥ करकलित
स्यगोवर्धनगिरेः पतनशंकयांगुलीपल्लवैरक्तांगुलीभिः कृत्वास्रस्तंगलितं वर्णं वैशिकं नैवारीकरोति तनोः सकाशात्स्रस्तं च्युतमंशुकं
प्रावरणं च न हरत्याहरतीत्यर्थः॥ करचरणनेत्रमस्तकप्रधानानां सर्वांगानामित्यर्थः॥ शुष्कोष्ठतालुकंठैरोष्ठतालुकंठशोषैरिति भावः॥ त्रस्त
स्यगावः विस्तीर्णे आयते भुजगस्य व्यालराजस्य वक्त्रकुहरे मुखबिले व्यात्ते इत्यादि॥ व्यात्ते भयप्रसारिते॥ तस्य वन्यस्तं तृणानामवलीढमवलेहो
येन तादृशे॥ न्यस्तस्रस्तेति पाठे न्यस्तानि खंडानि स्रस्तानि गलितानि येषां तादृशैस्तृणैरवलीढे युक्त इत्यर्थः॥ तादृशे वदने व्याकीर्णा व्याप्ताः फे

भयानकस्यानुभावाः॥ तत्र भरतः॥ करचरणनेत्रमस्तकसर्वांगानां प्रकंपनेश्चैव॥ शुष्कोष्ठतालुकंठैर्भयानको नित्यमभिनेयः
॥ रोमांचवदनवैवर्ण्यस्वेदादय ऊहनीयाः॥ यथा॥ व्यात्तन्यस्ततृणावलीढवदनव्याकीर्णफेनोच्चयकाकुव्याकुलघोरघर्घर
रवस्फारीभवल्लोचनं॥ कंपप्रस्खलदंघ्रिवामनतनुश्वासोर्मिनुन्नाधरं विस्तीर्णे भुजगस्य वक्त्रकुहरे कृष्णस्य गावः स्थिताः॥ बी
भत्सस्यानुभावाः॥ तत्र भरतः॥ आनननेत्रविघूर्णनलोचननासापिधानेश्च॥ अव्यक्तवादपतनैर्बीभत्सः सम्यगभिनेयः॥ सर्वां
गसंहारनिष्ठीवनादय ऊहनीयाः॥ यथा॥ कपटहरेर्मुखकुहरे विवृतसंवीक्ष्य दिनकरं लक्ष्मीः॥

नोच्चयः फेनसमुदायो यस्मिन्क
र्मणि यथा भवति तथा॥ काक्विति काकुः स्वरविशेषस्तया व्याकुलो युक्तो घोर उग्रो घर्घरो घर्घरानुकृतो रवः शब्दो यत्र स्फारीभवद्विस्तारं भजल्लो
चनं चक्षुर्यत्र कंपेन प्रस्खलन्नंघ्रिश्चरणो यत्र वामना संकुचिता तनुर्यत्र श्वासपरंपराभिर्नुन्नः कंपमानोधरो यत्र तथा स्थिता इत्यर्थः॥ अव्यक्तवा
दपतनेस्तंभनस्खलनेरितियावत्॥ लक्ष्मीर्मायाविनः श्रीनृसिंहस्य विवृते व्यात्ते विकृत इति पाठे भयंकर इत्यर्थः॥ मुखकुहरे मुखरंध्रे दिनकरं

तंपंसंवीक्ष्य हतस्य दैत्यस्य हिरण्यकशिपोः पललस्य मांसस्य कवलो ग्रासस्तद्भ्रांत्या मुखं॥

अंशुकैरिति बहुवचनेनावृतेनाभिप्रायेणेव बीभत्सः पोष्यते पिदधे आच्छादितवतीत्यर्थः॥ परुषग्रहणोल्लासे दुःश्राव्योद्भवैः॥ इदं च हाहाकारविशेषणं॥ स्पर्शग्रहणोल्लासैरिति पाठे न तुल्यस्कंधं॥ तत्र स्पर्शो धरांगुलिस्पर्शदंतजिह्वाग्रपीडनादिः॥ ग्रहणं गलग्रहणकरनालिकादि॥ उल्लासः शिरोघ्राणचुंबनादिरित्यर्थो बोध्यः॥ स्वरभेदै रुदात्तादिभिः॥ अर्जुनं दोरिति दीर्घबाहुबलविध्वंसितशत्रुबलं वीक्ष्य नाकिनां स्वर्वासिनां नेत्रेजातमभिप्रायेणैकवचनं निमेषाः पक्ष्माकुंचनानि॥ अद्यापीदानीमपि नैव जाग्रति नैवोद्भवंति दृढं निर्निमे

हतदैत्यपललकवलभ्रांत्यामुखमंशुकैः पिदधे॥ अद्भुतस्यानुभावाः॥ तत्र भरतः॥ पुरुषग्रहणोल्लासैर्हाहाकारैश्च साधुवादैश्च॥ वेपथुगद्गदवचनैः स्वरभेदैरभिनयस्तस्य॥ निर्निमेषप्रेक्षणरोमांचाद्यप्यूहनीयाः॥ यथा॥ पांडवं वीक्ष्य दोर्दंडखंडितारातिमंडलं॥ अद्यापि नाकिनां नेत्रे निमेषा नैव जाग्रति॥ इत्यनुभावनिरूपणं नाम तृतीयस्तरंगः॥ अथ सात्विकभावान्निरूप्यंते॥ तत्र भरतः॥ स्तंभः स्वेदोथ रोमांचः स्वरभंगोथ वेपथुः॥ वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विका मताः॥ नन्वस्य सात्विकत्वं कथं॥ व्यभिचारित्वं न कुतः सकलरससाधारण्यादिति चेत्॥

षप्रेक्षणाभ्यासादिति भावः॥ ॥इति श्रीजड्युपनामकगंगारामविरचितायां नौकाख्यायां रसतरंगिणीव्याख्यायां तृतीयस्तरंगः॥ श्रीः॥ तथैव सात्विकभावनिरूपणं प्रतिजानीते॥ केवलयोगस्यानतिप्रसक्तत्वाभावाद्वैश्यानिर्धारणात्तानुद्दिशति॥ शंकते॥ सात्विकत्वं सात्विकपदव्यपदेश्यत्वं॥ कथमिति॥ सत्वं जीवस्तदीयत्वनिबंधनस्तथा व्यपदेश इत्युक्तं॥ व्यभिचारिणामपि जीवाश्रितत्वादिति भावः॥ प्रस्तुतविशेषणाभितश्चारयंतीति व्यभिचारिण इति व्युत्पत्त्या कर्मीभूतरसविशेषानुपन्यासात्सामान्यतो रसमात्रचारकत्वे व्यभिचारिपदप्रवृत्तिनिमित्तत्वमध्यवसीयते तेन च सात्विकभावेष्वपीति तत्रापि व्यभिचारित्वव्यपदेशः कुतो नेत्याह॥ सत्वेन जीवमात्रेण युक्ताद्दुःख

स्वपरसाधारणदुःखभावनायामनुकूलत्वं तस्य तत्प्रवृत्तिनिमित्तं गम्यते तच्चानुकूलत्वमयमनुकूलोऽयं च प्रतिकूल इति प्रतीतिसाक्षिकः स्वरूपसंबंधविशेषः स चैतेषामेवेति व्यभिचारित्वेपि तेषां पृथगुक्तिरिति मतं दूषयितुमुपन्यस्यति॥ सत्वं नामेति॥ सत्वपदप्रकृतिकठक्प्रत्ययार्थसंबंधित्वं चेत्यर्थः॥ एतेन निरुक्तप्रकृतेरुक्तार्थलक्षणायां तात्पर्यग्राहकाभावेनानाम्नासापत्तिः॥ सत्वशब्दस्य प्राणिवाचकत्वादित्यग्रिमग्रंथविरोधापत्तिश्चेत्यपास्तं॥ सर्वसाधारणदुःखभावनायामनुकूलत्वस्य विवक्षितात्यंतिकत्वगमकस्यावगतये कैमुतिकन्यायेन स्वीयदुःखभावनायामनुकूलत्वं प्रतिपादयितुं परकीयेति॥ जीवपर्यायसत्वपदप्रकृत्यास्वार्थाव्यभिचारिणो दुःखस्यैवोपस्थितेस्तत्समभिव्याहृतप्रत्ययप्रतिपाद्ये दुःखमेव घटयति॥ दुःखभावनायामिति॥ यथाश्रुतप्रत्ययार्थावर्तमानत्वं तच्च निरुक्तप्रकृतिसमभिव्या

अत्र केचित्॥ सत्वं नाम परकीयदुःखभावनायामत्यंतानुकूलत्वं तेन धनाः सात्विका इति व्यभिचारित्वमनादृत्य सात्विकव्यपदेश इति॥ तन्न॥ निर्वेदस्मृतिधृतिप्रभृतीनामपि सात्विकव्यपदेशापत्तेः॥ न च परदुःखभावनायामष्टावेवात्यंतमनुकूलशब्दार्थोऽतएव सात्विकत्वमप्येषामिति वाच्यं॥

हारादेरुक्तदुःखभावनाकालीनत्वरूपमप्यतिप्रसक्तमित्युक्तमेवातोऽत्यंतेति॥ आत्यंतिकत्वं च सर्वसिद्धप्रतीतिसाक्षिकत्वमेवेति नातिप्रसंगः॥ तेन तदात्मकेन संबंधेन॥ धृता अधिष्ठिताः॥ इतीति॥ उत्पत्तिविशेषमादृत्येति शेषः॥ व्यभिचारित्वमिति॥ सामान्यतयेति शेषः॥ तथा च निरुक्तविशेषमभिप्रेत्य सात्विकभावानां पृथक्करणे तेषामेवोत्कर्षणतया प्रथमं निरूपणमुचितमिति भावः॥ तादृशनिर्वेदादिव्यावृत्तस्तंभादिसाधारणस्वरूपसंबंधरूपानुकूलत्वे प्रमाणाभाव एव॥ साक्षात्क्रियमाणत्वस्य गमकतायां न प्रयोजकत्वं किंत्वविनाभावस्य स च जन्यत्वं वा गमकत्वं वा यथाश्रुतमन्येषामपीत्यभिप्रेत्यैतन्मतं दूषयति॥ तथा च परदुःखभावनायामुत्पत्तिरूपमेवानुकूलत्वं वाच्यं न च ज्ञायमाननिर्वेदादिसा

धारणमेवेति भावः॥ अत्रैवेमत्यं परिहर्तुं शंकते॥

इतिर्हेतौ॥ अनुकूलशब्दार्थ इति यथाश्रुत एव विवक्षित इति शेषः॥ अत एव निर्वेदादीनां तत्रानुपपत्तेरेव॥ अपि रनुकूलशब्दार्थत्वसमुच्चायकः॥ एषामष्टानामेव॥ वैमत्यं परिहरति॥ उत्पत्तिरिति॥ इति शब्दो न चेत्यत्र हेतुः॥ प्राणी जानाति प्राणी चेष्टत इति प्रतीत्योरविशेषणशरीरावच्छिन्नात्मप्रतिपादकप्राणिपदपर्यायीभूतस्यापि सत्त्वशब्दस्य प्रकृते शरीरमात्रपरत्वमेव तस्य धर्मा इति मुख्यत्याः शरीरधर्माः सात्त्विकशब्देन मुख्यया वृत्त्योच्यं तेते ह्यश्रवे वेति तत्कारणीभूता मानसा विकारास्ते नैव शब्देन गौण्या वृत्त्योच्यं ते न तु कार्यीभूताः शरीरधर्मा एवात्र सात्त्विकभावशब्देन विवक्षिताः॥ न चैवमांतरा बाह्याश्चेति प्रागुक्तविभागासंगत इति वाच्यं॥ बाह्या इत्यस्य बाह्यविकारजनकीभूता इत्यर्थकत्वात्॥ अत एव विकारो मानसो भाव इति कोशः संगच्छत इति न कोपि दोष इति प्राञ्चः॥ तन्न॥ त्वदभिमतमानसविकारकारणका

निर्वेदादेरपि परदुःखभावनायामप्युत्पत्तिरिति॥ अत्रेदं प्रतिभाति॥ सत्त्वशब्दस्य प्राणिवाचकत्वादत्र सत्त्वं जीवशरीरं तस्य धर्माः सात्त्विकाः॥ इत्थं च शारीरा भावास्तंभादयः सात्त्विकभावा इत्यभिधीयंते॥ स्थायिनो व्यभिचारिणश्चेति भावा आंतरतया न शरीरधर्मा इति॥

नं शारीराणामेव तथात्वोपपत्तौ तादृशमानसविकारे मानाभावात्॥ न च विनिगमनाविरह इति वाच्यं॥ शारीराणां तेषां प्रत्यक्षसिद्धतयोभयसंमतत्वात्॥ अस्मन्मते च तत्कारणं क्लृप्तस्व मानसविकारो न तु कल्प्य इति तेषामेकमात्रसिद्धत्वात्तावतैव तेषां धूमादिसंभूताश्रुप्रभृतिवैलक्षण्यमपि सर्वसंमतं समापाति॥ न चैवं विकारो मानसो भाव इति कोशासंगतिरिति वाच्यं॥ तत्र मानसपदेन मनोधीनस्थितिकत्वविवक्षणात्॥ अधीनत्वं च साक्षात्परंपरया च बाह्यानामविशिष्टमेवेत्यभिप्रायेणाचरयति॥ इत्थं चेति॥ शारीरत्वे सति स्थायिभावप्रकारकोपविशेष्यीभूतभावत्वं सात्त्विकभावसामान्यलक्षणमित्यर्थः॥ इति भावा इति॥ इति व्यपदेश्या भावा इत्यर्थः॥ न शरीरधर्मा इति॥ तथा च सत्त्वं तेन

गतीतिगतिसामान्येत्यर्थः॥ सत्यंतप्रयोजनमाह॥ सामान्यपदकृत्यमाह॥ चेष्टानिरोधश्चेष्टामात्रनिरोधः॥ नगतीतिनगतिसामान्येत्यर्थः
वस्तुतस्तुगतिनिरोधः पादप्रक्षेपनिरोधः॥ चेष्टानिरोधः शारीरक्रियासामान्यनिरोधः॥ नगतिनिरोधः नपादप्रक्षेपरूपशरीरक्रियाविशे
षस्यैवनिरोधइत्यर्थः॥ अतएवसर्वथाऽपटुत्वएवप्रलयपदव्यवहारः सांप्रदायिकानामिति॥ अस्यस्तंभस्य॥ क्वचिदस्येतिस्थानेऽस्येतिपाठस्त
त्रास्येतिप्रकरणप्राप्तमेवेतिबोध्यमेवमग्रेपि॥ रमणीयपक्ष्मसंबंधिनीदृग्दृष्टिर्यस्यास्तयागोविंदंश्रीकृष्णंसमुदीक्ष्यजातःस्तंभोहेमातरितिस
खींप्रतिसानुकंपोक्तिरप्रतार्यत्वप्रकटनायममेत्यार्थिकंश्रोणीकटिपश्चाद्भागः पीनतरातिशयेनपीनातनुर्मध्यादिरूपाकृशतरातिसूक्ष्माव

शरीरधर्मत्वेसतिगतिनिरोधःस्तंभः॥ नचनिद्रापस्मारादावतिव्याप्तिः॥ शरीरधर्मपदेनतेषांवारणात्॥ प्रलयभावेतुचेष्टानिरो
धोनगतिनिरोधः॥ अस्यविभावाः॥ हर्षरागभयदुःखविषादविस्मयक्रोधाः॥ यथा॥ श्रोणीपीनतरातनुःकृशतराभूमीधराडंब
रावक्षोजस्यतटीकुतोनिजकुटीमातर्मयागम्यतां॥ इत्युद्दाम्यकदंबकुंजनिकटेविश्रम्यमंदस्मितंगोविंदंसमुदीक्ष्यपक्ष्मलदृशा
स्तंभस्तिरोधीयते॥ वपुषिसलिलोद्गमःस्वेदः॥ सोजस्नस्येत्येकवचनेननभेदग्रहप्रतिबंधकत्वंनसंश्लेषोध्वन्यतेनटीप्रावाररूपाभूमीध

राडंबरोच्चैस्तरत्वेनपर्वतसादृश्यवतीनेनातिकृशमध्यस्यातिपृथुलोभयभागस्यचशरीरस्योद्वहनानभिरूपताप्रतिपादितातर्हिमयाकुतःके
नोपायेननिजकुटीस्वीयापर्णशालागम्यतांप्राप्यतामित्युद्दाम्यबोधयित्वाकदंबकुंजनिकटेसमुदितकदंबगृहसमीपेविश्रम्यश्रीकृष्णावलो
कनार्थंसमस्तमुपविश्यापितिरोधीयतेकारणांतरप्रभूतत्वबुद्धिंतत्रोत्पादयतागोपाय्यतइत्यर्थः॥ स्वेदंलक्षयति॥ नारिकेलादावपिसलिलोद्ग
माद्वपुषीति॥ तच्चनेत्रभिन्नशरीरावयवपरं॥ तेनाश्रुण्युदासः॥ धर्मसंभूतस्वेदेसात्विकत्वव्यपदेशाभावाद्वपुःपदसमभिव्याहृतोद्गपसर्गोविकारसं

भवाभिप्रायः॥ एवमग्रेपि॥

अस्यभावाभावसाधारणस्यस्वेदस्यविभावाः कारणानि॥ एवमग्रेपि॥ विपरीतरतिश्रांतांनायिकांप्रतिसखीप्राह॥ कांतेसुंदरिस्वेदबिंदवस्तवकु
चप्रांतेराजंतेशोभंते॥ उदाहरणंयोजयितुंतत्रोत्प्रेक्षते॥ हृष्यताःघटितघटनासंजाततोषेणमदनेनमनोभुवाकृतामौक्तिकवृष्टयइवेवेत्यस्य
तिमन्यइत्यर्थः॥ क्वचित्पुस्तकेमदनेनैवेत्येवकारघटितःपाठोदृश्यतेसतुकरुजुरेव॥ तत्रैवंव्याख्येयं॥ स्वीयानुरागगोपायंतींनायिकांप्रतिनाय
कःसाकूतमाह॥ कांतइति॥ हेकांतेऽभिलाषवतियेस्वेदबिंदवस्तवकुचप्रांतेराजंतेवर्ततेतएतद्व्याख्याहृष्यपोज्यं॥ मौक्तिकवृष्टयो
मौक्तिकाकाराःवृष्टद्रूणानतुधारारूपास्तेनश्रमसंभूतेभ्योवैषम्यमाविष्कृतं॥ मदितिपंचम्यंतमस्मदोरूपंमत्तइत्यर्थः॥ हृष्यताविपु
लोभवताऽनेनाभिलाषेणकांतापदार्थैकदेशस्यापितस्यतात्पर्यानुरोधात्सरामर्शोनविरुद्धइतिभावः॥ कृतारएवत्यनेनत्वयापह्नुते

अस्यविभावाः॥ मनस्तापहर्षलज्जाक्रोधभयश्रमपीडाघर्ममूर्छोदयः॥ यथा॥ कांतेतवकुचप्रांतेराजंतेस्वेदबिंद
वः॥ हृष्यतामदनेनेवकृतामौक्तिकवृष्टयः॥ विकारसमुत्थरोमोत्थानंरोमांचः॥ अस्यविभावाः॥ शीतालिंगनहर्षभय
क्रोधाः॥ यभिलाषेस्वासाधारणकर्मणासौप्रकृतएवेतिपुनराकूतमावेदितं॥ रोमांचंलक्षयति॥ शीतसंभूतरोमोत्थानेसात्विकत्व
परिहाराभावाद्विकारेत्युक्तं॥ नचैवंसात्विकभावविभावेषुशीतपदानर्थक्यमितिवाच्यं॥ विकारपदव्यावर्त्यसद्भावप्रदर्शनायैवतदुपादाना
देवमग्रेपि॥ नचैवंपदांतरप्रक्षेपेणाहत्यतद्वारणेकःपुरुषार्थइतिवाच्यं॥ रसानुकूलत्वतदननुकूलत्वरूपवैलक्षण्यप्रतिपत्तेरेवतत्त्वात्॥
भावसामान्यलक्षणस्यैवतदर्थत्वमितितुमाशंकिष्ठाः॥ सामान्यलक्षणाक्रांतमेवहिविशेषलक्षणलक्ष्यं॥ सात्विकभावानामेतदाक्रांत
त्वंह्यनुभावतयारसानुकूलत्वादेव॥ नचशीतोत्थरोमोत्थानस्थायिनःकार्यंतद्धिलीनमेवतज्ज्ञापकत्वप्रत्याशयापीत्यन्यत्रविस्तरः॥

हे आलि सखि स्मितसुभगो हास्यमनोहरो नंदसूनुर्वकुलेत्यादि वकुलनामकरसाणांकलिकात्मनः कोशाद्गुंडारगृहात्कोशतो नूतोद्दीप
कत्वातिशयद्योतनायालिश्रेणीषु कृपाणत्वम्व्यज्यते॥ सोयमुंजनामूलध्वनेरध्वा॥ कृपाणत्वयोग्यश्रेणीरूपतायेरोषस्तेषामभिहितः॥
भवत्सेवहि तुल्यापराधजनितशेषाणामेकवाक्यता॥ न चासौ परस्यानुसरणं विना परस्यैकवाक्यतेति तया सर्वेषां परानुसरणरूपाश्रे
णी निवेद्यते॥ तादृशतुल्यापराधतास्यपेक्षमेव हि मुकुलेति पदमनर्थिप्रवृत्तमकरंदतामभिव्यनक्ति॥ रोषेणानिर्गच्छंतोयमधुकरास्ते
षांकूजितसेविन्यां कुंजभूमौ लतामंडपे कपोलपालिं गंडतटीं॥ अद्येति लोकोक्त्यनुकृतिः॥ कथमनिर्वचनीयेन कारणेन पुलकपतिसंजा
तपुलकां करोतीत्यर्थः॥ स्वरभंगं लक्षयति॥ स्वरस्वभाववैलक्षण्यं स्वलितानुकरणप्रस्यतोभूतांतं॥ तावन्मात्रं च कृत्या संभूते तत्रैव गतम

यथा॥ बकुलमुकुलकोशाद्रोषनिर्यन्मधुकरकूजितभाजि कुंजभूमौ॥ पुलकयति कपोलपालिमालि स्मितसुभगः कथमद्य
नंदसूनुः॥ गद्गदत्वप्रयोजकीभूतस्वरस्वभाववैलक्षण्यं स्वरभंगः॥ अथ विभावाः॥ क्रोधभयहर्षमदाः॥ यथा॥ व्यक्तिः स्यात्स्वर
भंगस्य कोपादुक्तिः क्रियेत चेत्॥ इति पश्युः पुरो राधा मौनमाधाय तिष्ठति॥

तो वैलक्षण्यमिति॥ तदप्यभिव्यंजककंठादिवीणादिभे
दभिन्नमतिप्रसक्तमेवेति स्वभावेति विकाराप्रभूतभेदस्फोरणाय॥ तच्च वैलक्षण्यमुक्तकृत्या कार्यव्यावृत्तमनुभवसिद्धमेव विपश्चितामिति
मधुपानसंभूतमदकृत्यासाधारणविभावितं स्वरवैवर्ण्यसामान्यमेव लक्ष्यमित्यभिप्रेत्यैव विकारोद्भूतत्वमत्रपरिव्यक्तमित्यपि केचित्॥ चे
दुक्तिः इहस्यान्तरं क्रियेताभिधीयेत तर्हि कोपात्कोपवशात्कोपमनुमापयितुमिति यावत्॥ स्वरभंगस्य वैवर्ण्यस्य व्यक्तिः प्रकाशः स्याद्भवेदि
ति सा मा भवत्विति रुलाव्यकोसत्याहितेन नानाचाटुकारैर्बलात्कोपेपनीते दाक्षिण्याहृतः पुनरनेन सह संलापः प्रसज्येनैवेति मत्वेति यावदनेन

पत्युर्नायकधुरीणस्य श्रीकृष्णस्य परां श्रेष्ठां राधेति राध्नोति स्वाभिलषितमित्यर्थो राधापदशक्तिमूलानुरणनविषयो मौनं वाङ्निःयमन्या जमा
धापालंब्यति श्वतीत्यर्थः॥ वेपथुं लक्षयति॥ शरीरस्पंदश्शारीररूपोत्यावयविकंपः॥ सूत्रकस्पंदादाविति॥ अन्यथाभासहेतुपरप्रयोज्य
स्वोत्क्षेपणापक्षेपणरूपावयविकर्मणीत्यर्थः॥ नातिव्याप्तिरिति॥ मनोविकारजन्यत्वप्रयुक्तं भावत्वं चन तत्रेति तद्वारणमिति भावः॥ चे
ष्टाश्रयमात्रपरं चेष्टावदंत्यावयविपरमित्यर्थः॥ शरीरावयवकंपे हासोद्भूताधरस्पंदादाविति भावः॥ नातिव्याप्तिरिति॥ तत्र विकारसंभूत
त्वेपि शरीररूपावयविक्रियात्वाभावादिति भावः॥ नचासा शरीरक्रियैवेति वाच्यं॥ क्रियायाव्याप्यवृत्तित्वेन शरीरक्रियायाः सर्वावयवाव

भावत्वे सति शरीरस्पंदो वेपथुः॥ भावत्वे सतीति विशेषणात्सूत्रकस्पंदादौ नातिव्याप्तिः॥ शरीरपदं चेष्टाश्रयमात्रपरं॥
तेन शरीरावयवकंपे नातिव्याप्तिः॥ अस्य विभावा आलिंगनहर्षभीत्यादयः॥ तथा॥ कथय कथमुरोजदामहेतोर्पदुपतिरे
षविनोतु चपकानि॥ भवति करतलेयदस्य कंपः प्रियसखि मत्स्मृतिरेव मत्सपत्नी॥ छेदेनोपलब्धिप्रसंगात्॥ नचैवमपि भयसं
भूतपलायनेतिव्याप्तिरिति वाच्यं॥ पलायनस्यापि पाद्याद्यवयवक्रियारूपत्वात्॥ युगपत्क्रियपारथक्रियावदेकावयवक्रियपाऽन्यत्रावयवेषु
क्रियाकलापाभ्युपगमात्॥ वेपथुस्तु सर्वशरीरावच्छेदेनवोपलभ्यत इति भवत्येव शरीरक्रियारूप इत्याशयात्॥ वस्तुतस्तु॥ सूत्रकस्पं
दादौ बाहुस्फुरणादौ॥ चेष्टाश्रयमात्रेति॥ मात्रपदं कृत्स्नार्थकं॥ शरीरावयवकंप इत्युपदर्शितार्थकमेव॥ नातिव्याप्तिरिति॥ प्रकृतलक्षण
स्येत्यादिः॥ तस्य व्याप्तिपदार्थसंबंधेन्वयः॥ व्यापनं संबंधः सैव व्याप्तिरिति क्रांताप्रकृते शरीरावयवकंपेन वर्तत इत्यतिव्याप्तिस्तथा च प्रकृत
लक्षणसंबंधः शरीरावयवकंपे निरुक्तेनेत्युक्तिभंग्याव्याप्तिरेव पर्यवस्यति॥ नाव्याप्तिरिति क्वाचित्कः पाठस्तु स्त्रजुरेव॥ हे प्रियसखि सुखदुःख

सदानिकटवर्तीयदुपतिश्चंपकानि चंपकपुष्पाण्युरोजदामहेतोर्वक्षोजरामणीयकसाधनमालानिमित्तं कथं केन प्रकारेण विनोत्
संगृह्णातु॥ कथयेत्यत्र वाक्यार्थस्यैव कर्मत्वं कथयेत्यनेन श्रीकृष्णस्य स्वविषयकानुरागवत्त्वप्रतिपादनपुरःसरं निजस्मृतो सपत्नीका
र्यकारकत्वं द्वयंताकृविनिबद्धवक्षोतदीयानुरागातिशयमभिधत्ते॥ यद्यस्मात्कारणादस्य करतले करतलस्यैव संग्रहसाधनत
यातस्यैव वैकल्यं दर्शितं॥ तेन सर्वशरीरकंपो न विरुद्ध इति व्याख्या हृद्ये प्युदाहरणसंगतिः॥ कंपो भवति तत्त स्मात्कारणादहमेवं जा
ने यन्मत्स्मृतिरेव चंपकपुष्पात्मकसदृशावलोकनसंभूताममस्मृतिरेव नान्या कावित्तथा सति तथा प्रतिज्ञातथा संप्रवृत्तिश्लेष्यतद

विकारप्रभववर्णान्यथाभावो वैवर्ण्यं॥ अस्य विभावाः॥ मोहभयक्रोधशीततापश्रमाः॥ यथा॥ कुक्कुटं कुर्वति काणमाननं श्लिष्ट
योस्तयोः॥ दिवाकरकराक्रांतशशिकांतिमिवादधौ॥ विकारजनितमक्षिसलिलमश्रु॥ अस्य विभावाः॥ हर्षामर्षधूमभ
यशोकजंभाशीतनिर्निमेषप्रेक्षणानि॥ खिलमाकुलीभवेन्मत्सपत्नीमत्समीहितविघ्नकारिणी जातेत्यर्थः॥ वैवर्ण्यं लक्षयति॥ ज्व

रातपादिकृतवैवर्ण्यव्यावर्तनाय प्रभवांतं॥ श्लिष्टयोरसभरानाकलितप्रभातवेलसमालिंगनासक्तयोः कयोश्चित्स्त्रीपुंसयोराननं कुक्कुरे ताम्र
चूडे काणं प्रभातध्वनिं कुर्वति सति॥ दिवाकरेति॥ सूर्यकिरणपरिभूतचंद्रद्युतिमादधाविवेत्युत्प्रेक्षा॥ उत्कंठापूर्त्यभावेन ह्रीयमानोऽजस्रम
भूदिति भावः॥ अश्रु लक्षयति॥ धूमाद्युत्थाश्रुव्यावर्तनाय जनितांतं॥ पक्ष्मलेरमणीयपक्ष्मयुक्ते आयते विस्तीर्णे चाक्षिणी यस्यास्तस्या नायि
काया अश्रुबिंदुर्नेवादितमश्रु॥ अक्ष्णोः सकाशाद्हस्रसि निपतति तत्रोत्स्रसते॥ हे चित्तलमित्यध्याहार्यं तथा सत्येव मध्यमपुरुषस्य साधु
त्वादित्येके॥ नाध्याहार्यमित्यन्ये॥ न चाध्याहाराभावे मध्यमपुरुषस्य साधुता न स्यादिति वाच्यं॥ मध्यमपुरुषप्रयोगे हि युष्मदस्ति ड. पश्याष्या

र.त. पस्थापकत्वमावश्यकंनतुयुष्मदनुप्रयोगोपितत्त्वसंबोध्यत्वरूपंतेनविनापितदेतदभिप्रेत्यैवस्थानिन्यपीत्युक्तं॥प्रयोगयोग्यत्वेपी नौका
३० त्यस्यतदर्थत्वात्॥एतेनाध्याहारोनानुप्रयोगस्यविषयः॥किंतुस्थानिन्यपीत्यस्यैवेत्यस्तुसन्नप्रलपितमनादेयं॥फलेभ्योयातीत्यत्राह
तुमित्यस्याध्याहारेपिसाधुतापत्तेः॥नचेष्टापत्तिः॥कारकविभक्त्याचतुर्थीबाधापत्तेः॥नचाध्याहृतमनाकांक्षमेवेतिवाच्यं॥अध्याहा
रादिनाचतुर्थ्यादीनांसाधुतानुपपत्तिरितिबहुव्याकोपापत्तेरित्यलमाविशेन॥तममुंविशेषमभिप्रेत्यैवसकलपदवाक्यप्रमाणपारा
वारीणैःश्रीकालिदासैः॥इतःपरानर्भकहार्यशस्त्रान्वैदर्भिपश्यानुमतामयासि॥एवंविधेनाहववेष्टितेनत्वंप्रार्थ्यसेहस्तगताममैभिः
॥इतिश्लोकेकर्त्राख्यातमध्यमपुरुषसमभिव्याहारेणत्वंपदंनप्रयुक्तंकर्माकांक्षापूरणायतुतराहंसंबुध्यसमभिव्याहृतेप्रयुक्तमिति

यथा॥विसृजविसृजवित्तदुःखधारामयमुपकंठमुपागतोमुरारिः॥इतिकथयितुमस्रुबिंदुरक्ष्णोर्निपततिवक्षसिपक्ष्मलाय
ताक्ष्याः॥

मंतव्यं॥कासौयोग्यतेतिचेत्॥युष्मत्सामानाधिकरण्यंयदाहुः॥समानाधिकरणइति॥नचैवंभवच्छब्दप्रयोगेपिमध्यम
पुरुषापत्तिरितिवाच्यं॥युष्मदीत्यस्यसावधारणत्वात्॥नचैवंतुल्ययुक्त्यास्मत्पर्यायप्रयोगेउत्तमपुरुषोप्यसाधुरितिस्थितेसोत्यहमर्थ
कमव्ययमितिवृत्तिविरोधइतिवाच्यं॥अहमर्थकमित्यस्याहंशब्दार्थकमित्यर्थोलक्षितलक्षणयातदर्थोपस्थापकत्वोक्त्यासत्त्व
योगयोग्यत्वस्यैवतेनावेदनात्॥युष्मदस्मदुपस्थित्यद्वारकपदांतरानुपस्थाप्यत्वस्यैवावधारणार्थत्वात्॥अन्यथाभावनायाःप्रथ
मांतार्थेन्वयइतिव्युत्पत्तिभंगापत्तेरस्मदर्थेतदन्वयबाधादसंबद्धप्रलापापत्तेरहमर्थतात्पर्यसंबंधोद्बोधेचकिंपदस्मृत्येति॥दुःख
धारांसंतन्यमानंदुःखंविसृजविसृजजहीहिजहीहित्वरावगतयेवीप्सा॥तत्रहेतुमाह॥अयमिति॥यतइतिपूरणीयंअयंमुरारिर्मुकुंदउपकं

रामः
३०

शरीरधर्मत्वे सतीत्यर्थः॥ चेष्टानिरोधश्चेष्टानुत्पत्तिप्रयोजको यमेव चकारणापाठवशब्देन शैथिल्यशब्देन च व्यपदिश्यते॥ सत्यं तदलप्रयोजनमाह॥ ननु चेष्टाक्रियामात्रं मनःक्रियानिरोधसाधारण्येनार्थप्रत्यायकप्रलयपदसमभिव्याहारात्॥ तथा च यत्किंचिच्चेष्टानिरोधो ऽतिप्रसक्तो यथा प्रागुक्ते वेपथूदाहरणे एव वेपथौ पृथ्वावचयानुत्पत्तिप्रयोजकता॥ एवं स्तंभेपीति चेष्टासामान्यनिरोधो वाच्यस्तथा ऽसंभवः प्रकृतोदाहरण एव मनःक्रियोत्पत्तेरुक्तत्वादित्याशंकां वारयति॥ साहचर्यकथनेनेति तृतीयातत्पुरुषः सा च तृतीया विशेषणे॥

शारीरत्वे सति चेष्टानिरोधः प्रलयः॥ शारीरत्वे सतीति विशेषणान्निद्रादौ नातिव्याप्तिः॥ स्तंभादयः शरीरधर्मास्तेषां साहचर्यकथनेन प्रलयोपि शरीरधर्म एव विवक्षितः॥ तेनात्र चेष्टापदेन शरीरचेष्टैवाभिमता॥ मनसस्तु कर्म भवति न तु चेष्टा॥ अत एव चेष्टाश्रयः शरीरमिति शास्त्रीयं लक्षणं॥ अस्य विभावा रागोत्कण्ठादयः॥ यथा॥ नो वक्त्रं नमितं धृतं न च शिरो न्यावर्तितं नो वपुर्व्वासो न श्लथमाहृतं न निगदितं नो वा निषेधाक्षरं॥ शोणेनापि विलोचनं विरचितं क्रीडाकलाकातरं चेतः केवलमानने मधुरिपोर्म्मापारितं राधया॥

प्रलयोपि प्रकृते प्रलयपदार्थोपि॥ शरीरधर्म एवेत्येवकारेण मनःक्रियानिरोधकमनोधर्मव्यवच्छेदः॥ तेन शरीरधर्मविवक्षणेन॥ शरीरचेष्टैव हिताहितप्राप्तिपरिहारार्था क्रियैव अत्रैवकारो मनःक्रियां व्यवच्छिनत्ति॥ तथा च तादृशक्रियात्वावच्छिन्ननिरोधो लक्षणे विवक्षित इति न कोपि दोष इत्याह॥ चेष्टापदप्रयोगे निहतार्थत्वं परिहरन्नेव चेष्टापदार्थस्य तादृशशरीरमात्रधर्मत्वसंमतिमाह॥ अन्यथातिप्रसंगादिति भावः॥ अत्र मानातिशयप्रगुणीकृतविप्रलंभार्जितदुःसहज्वरदुःखखिन्नया शठतानुसंधानसंभृतरोषप्रकर्षग्रहिलयाप्यवितर्किततत्कालवृत्तदुर्घटसमागमसंजातोत्कंठाभरतरलांतःकरणया राधया तन्मुखानवलोकनस्पृहानुवर्तनेपि

वक्त्रंमुखंनोनमितंननम्रीकृतंतथाचुचुकपरामर्शेशिरस्तनधुतंनिषेधायनकंपितंआश्लेषेवपुःशरीरंनोव्यावर्तितंनविपरीतंकिंचिद्दलि

तंश्लथंगलितंवासोवस्त्रंस्वयंनाहृतंधृतंतेनपरामर्शेनिषेधाक्षरंनेतिवानोनिगदितमुक्तंविलोचनमपिशोणमारक्तंनविरचितंभोक्तव्यंभु
क्तमतःपरंकिंरोषेणेतिमत्वानकृतंकिंतुक्रीडाकलासुक्रीडाविशेषविषयेकांतरंदीनंश्रेयांसिबहुविघ्नानीतिन्यायाच्चेतोंतःकरणंकेवल
मित्यवधारणेनेनोदाहरणसंगतिः॥ मधुरिपोःश्रीकृष्णस्यपरदुःखप्रहाणशीलस्येतिपदध्वनिः॥ आननेमुखेव्यापारितंप्रेरितमितिपुन
रपव्याख्यानं॥ तथासतिगुणीभूतरोषवितर्तीकरणंमुख्यकांतर्यंनिर्देशमात्रमित्यनुदाहरणताशंकाकलुषितत्वाद्दोषकांतर्ययो
रेकविषययोरेकदासंभावितयोर्वर्णनेकविसंरंभानाधायकतयाहृयोर्मुख्यतायाअसंभवात्॥ अन्यथाकविकुलक्षुण्णसरणिप्रच्य

जृंभाचनवमःसात्विकभावइतिप्रतिभाति॥

वापत्तेः॥ किंतुनविस्यादिनिषेधघटितवाक्यार्थषट्कंस्त्रीजातिस्वभाव्येनप्रसक्तप्रतियोगिसत्ताकंनिरुक्तप्रलयात्मनैवोपपन्नंनरोषपरं॥
वैवर्ण्यंसात्विकभावरूपशोणताप्यनिवार्याषाष्ठवाक्यार्थप्रबाधमानास्त्रीजातिस्वभावसुलभबलात्कृष्टनिमित्तांतरसंभूतवैवर्ण्यमपिमि
थ्याभूतरोषप्रभवतयाश्रीकृष्णापनप्रदर्शितमितिरूपेविश्राम्यति॥ जृंभायाःसात्विकभावत्वंवक्तुंयुक्तं॥ तस्यारसानुकूलत्वाद्धिक्काररूपत्वाच्च॥
नचलज्जासंभूतांगसंकोचस्यापितथात्वापत्तिरितिवाच्यं॥ लज्जाद्यव्यंजकस्यतस्यरसानानुगुणत्वात्॥ प्रागुक्तविकारत्वस्यास्यैतद्बाधितत्वाच्च
॥ नचस्वतःसुंदरत्वंजृंभायाअपिनास्तीतिवाच्यं॥ प्रामाणिकैस्तथात्वेनाभिधानात्॥ वातप्रभूतजृंभायाअतथात्वेपिविकारसंभूतायास्तस्यास्त

थात्वात्॥ यथातवधूमाद्युत्थाश्रुणःतथात्वेपिमनोविकारसंभूताश्रुणस्तथात्वमित्यभिप्रेत्याह॥ वायुपरिपोषश्चेत्यर्थः॥ नवमइति॥

न च तुल्ययुक्त्या निःश्वासोऽपि दशमः सात्त्विकभावो वक्तुमुचित इति वाच्यं ॥ मुखाविर्भूतवायुपरिपोषो जृंभा नासाविर्भूतवायुपरिपो
षो निःश्वासः ॥ इत्थं च जृंभात्वेन विभागे निःश्वासो दशमः सात्त्विकभावो युज्यत एव ॥ वायुपरिपोषत्वेन विभागे तु नवम एक एवाधिको भेद
इत्येतदाशयात् ॥ अत एव जृंभानिःश्वाससाधारण्येन नवमसात्त्विकभावत्वप्रापणायैवोभयचरितानोज्ज्वलसमर्पकमालस्यं ॥
भद्रो वा विदग्धो जलं कुचतटे स्वेदः प्रकम्पोऽधरे पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति ॥ आलस्यं नयनश्रियः स्मरणयोः स्तम्भः समुज्जृं
भते तत्किं राजपथे निजामधरणीपालोयमानाकित इति रसमंजर्यां जृंभास्थानेऽभ्यषेवि ॥ अन्यथा जृंभावक्त्रसरोरुह इत्येव प्रक्रमानुरोधा
त्पठितुं युक्तमित्युत्पश्यामः ॥ एवं स्थिते यद्यप्यनयैव प्रणाल्या स्वेदाश्रुणोरपि सलिलोद्गमत्वेनैकविभागत्वं वक्तुं शक्यं तथापि गणनायाः

ऊर्जन्नाननमुल्लसत्कुचयुगं स्विद्यत्कपोलस्थलं कुंचत्पक्ष्मगलद्दुकूलमुदयन्नाभिभ्रमद्भ्रूलतं ॥ बालाग्रांगुलिबद्धबाहुपरि
धिर्न्यंचद्विवृत्तत्रिकं त्वद्युक्तं वकसंधिदर्शिततलसद्दोर्मूलमुज्जृंभत इत्यादौ ॥ पुमिच्छामात्रनियंत्रितत्वादनुद्भाव्यमेव तदित्यवधे

यं ॥ तत्र संमतिमाह ॥ बालोज्जृंभत इत्युत्तरार्द्धोपात्ताभ्यामाद्यंताभ्यां पदाभ्यामन्वयो वशिष्टान्येकादश क्रियाविशेषणानि ॥ ऊर्जन्नाननं ॥ ऊ
र्जन्नर्नः प्राणो यस्य तथाननं यत्रेति व्युत्पत्त्याधिकश्वाससंचारि वदनं यत्र ॥ ऋजवस्तु द्विन्नाननमिति पठंति ॥ उल्लसत्कुचयुगं ॥ उत् उच्चैस्त
रतापचलस्त्वप्रकाशमानं स्तनद्वयं यत्र ॥ स्विद्यत्कपोलस्थलं ॥ घर्मजालयुक्तो गल्लदेशो यत्र ॥ एतेन जृंभायाः स्वेदसात्त्विकभावसामानाधि
करण्यमुक्तं भवति ॥ कुंचत्पक्ष्म ॥ मिलन्नेत्रपत्रं यत्र ॥ गलद्दुकूलं ॥ स्खलन्नीवीबंधो यत्र ॥ उदयन्नाभि ॥ ऊर्ध्वं गच्छन्ती नाभिर्यत्र ॥ भ्रमद्भ्रूलतं ॥
भ्रमंती भुग्ना भवंती भ्रूलता लताकारा भ्रूर्यत्र ॥ अग्रांगुलिबद्धबाहुपरिधि ॥ अंगुल्यग्रैर्बद्धो बाह्वोः परिधिः परिवेषो यत्र ॥ एतेनत्तद्देशितस्यान

र.त. न्यंचद्धिरत्तत्रिकं॥न्यंचदधोगच्छद्धिरूतंभुग्नंत्रिकं पृष्ठवंशाधोभागोयत्र॥त्रुट्यत्कंचुकसंधि॥त्रुट्यद्भज्यमानः कंचुकस्य कंचुलिकायाः संधिः टीका
३२ संधानंयत्र॥दर्शितलसद्दोर्मूलं॥दर्शितंकामुकलोचनातिथीकृतंलसत्त्वतः प्रकाशं दोर्मूलंकक्षप्रदेशो यत्र कर्मणि यथा भवति तथेत्यर्थः॥इ
त्यादाविवास्यसात्विकभावसामानाधिकरण्यदर्शनादित्यग्रेतनेनान्वयः॥तद्यथा॥सत्यंसतिगृहेगृहे प्रणयिनोयेषांभुजालिंगनव्यापारो
कुलद्दृढमोहनजलाजायंतएणीदृशः॥प्रेयान्कोप्यपरोयमत्रनियतंदृष्टेप्रियस्मिन्वपुः स्वेदोज्जृंभणकंपसाध्वसमुखैः प्राप्नोतिकांचिद्द
शामित्यत्रस्वेदोज्जृंभणकंपेतिस्वेदवेपथुरूपसात्विकभावसंपटिताजृंभानि दिष्टातेनतन्मध्यपतितस्तद्ग्रहणेन गृह्यत इतिन्यायाज्जृंभा
याःसात्विकभावतारुद्रस्याभिमतेतिभावः॥श्लोकार्थस्तुतेप्रणयिनः प्रेमपात्रभूताःपुमांसोगृहेगृहे प्रतिगृहं संतिवर्तंत इतिसत्यं॥नेकेए

शृंगारतिलकादौचसात्विकभावसामानाधिकरण्यदर्शनात्॥नन्वसौसात्विकभावोवानुभावोवेतिविनिगमनाविरह इतिचेत्
॥सत्यं॥अनुभावत्वेपिसात्विकभावत्वेबाधकाऽभावात्॥ णीदृशोयेषां॥भुजेत्यादि॥भुजाभ्यामालिंगनात्मनाव्यापारेणाकुलद्दृढ

लीभूयनिर्गच्छदकंस्वभावसुंदरंपद्मगंधीतियावत्॥मोहनजलंनिधुवनसंबंधीनिष्यंदोयासांतास्तथाविधाजायंतेयमुद्दिष्टः प्रेयान्को
प्यनिर्वचनीयलावण्योप्यपरोऽलौकिकएवसंभाव्यतेसंभावनार्थकापिपदोपसंदोपसंदानात्॥यस्मिन्नत्रप्रेयसिदृष्टेसत्यत्रस्योपरि
वधारणेवपुःशरीरंस्वेदश्चोज्जृंभणंचकंपश्चसाध्वसंचनामदुष्प्राप्तासंभावनासंभृतभयंचेतिप्रभृतिभिः समुदायैः कांचिदनिर्वचनी
यांदशामवस्थांनियतमवश्यमेवप्राप्नोतीत्यवसेयः॥अनुभावेष्वंतर्भावंशंकते॥भावलक्षणाक्रांतेनुभावत्वंभावत्वसंकीर्णमेवनविवि रामः
क्तमितिसमाधत्ते॥ननुविरुद्धयोरेकत्रसमावेशासंभवादन्यतरबाधावश्यकत्वमुनिवचोगौरवाद्यथाशास्त्रमेवज्यायइत्याशंकांविरोधपरि ३२

तयासात्विकभावत्वानुभावत्वयोःसंकीर्णतायाः॥ भ्रांतःशंकते॥ भ्रांतिमुद्घाटयति॥ नविकाराइति॥ नप्राणिप्रयत्नसाध्याइत्यर्थः॥ अं
गाकृष्ट्यादिषुप्राणिप्रयत्नसाध्यत्वमन्वयव्यतिरेकाभ्यांदर्शयन्जृंभायाःप्राणिप्रयत्नसाध्यत्वव्यतिरेकमाह॥ एतच्चकृत्वाग्रेविवृणो
ति॥ उदाहरति॥ महेश्वरोमानंप्रियापराधचेष्टामाधायकृत्वा॥ रहस्येकांतेतेनजृंभायाउद्दीपितवियोगकालावच्छिन्नरतिरूपविका
रसंभृतत्वमस्ति॥ स्थितायाउपविष्टायाअचलात्मजायाहिमालयसुतायाजृंभामुखव्यादानफलिकांवायुपुष्टिंसंभाव्यनिश्चित्यतत्स

पुलकादौतथादृष्टत्वात्॥ नचांगाकृष्टिनेत्रमर्दनादीनामपिभावत्वापत्तिः॥ तेषांभावलक्षणाभावात्॥ रसानुकूलोविकारो
भावइतिहितल्लक्षणं॥ अंगाकृष्ट्यादयोहिनविकाराःकिंतुशरीरचेष्टाः॥ प्रत्यक्षसिद्धमेतत्॥ अंगाकृष्टिरक्षिमर्दनंचपुरु
षैरिच्छयाविधीयतेपरित्यज्यतेच॥ जृंभाचविकारादेवभवतितद्विरतौनिवर्ततेचेति॥ यथा॥ आधायमानंरहसिस्थिता
याःसंभाव्यजृंभामचलात्मजायाः॥ चुटत्कृतिंस्मेरमुखोमहेशःकरांगुलीभिःकलयांचकार॥ इतिसात्विकभावनिरूपणंना
मचतुर्थस्तरंगः॥ अथव्यभिचारिभावानिरूप्यंते॥ तत्रभरतः॥ निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः॥ आलस्यंचैव
दैन्यंचचिंतामोहःस्मृतिर्धृतिः॥१॥

वलिंगात्सुसाध्यमानापनोदप्रतिपत्तेःस्मेरमुखोहसनकरांगुलीभिश्चुटत्कृतिंचुटदित्यनुक
रणंयस्यतंशब्दं॥ यद्वाचुटतःकृतिश्चेष्टाविशेषात्मिकातांकलयांचकारमानेनोद्दीपगतमित्युपहसतिस्मेत्यर्थः॥ इतिश्रीजड्युपनामक
गंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांचतुर्थस्तरंगः॥ श्रीः॥ नैवंव्यभिचारिभावनिरूपणंप्रतिजानीते॥ मानसत्वे
सतिस्थायिभावप्रकारकारोपविशेष्यीभूतभावत्वरूपलक्षणलक्षितत्वमेषांपृथङ्गिरूपणबीजमतस्तद्विधानेवविभज्यदर्शयति॥

र.त. अत्रत्रासश्चैववितर्कश्चव्यभिचारिणोव्यभिचारिपदवाच्याविज्ञेयाइत्यन्वयः॥त्रयस्त्रिंशत्संख्याकाव्यभिचारिणोनाम्नातुनाम्नैवनलक्ष नौका
३३ णतःसमाख्याताःकथिताइत्यर्थः॥व्यभिचारिपदप्रवृत्तिनिमित्तस्वशारीरमानसविकारसाधारण्याद्द्वयोरपिलक्ष्यत्वंयुक्तमित्याशये
नतौलक्षयति॥इतस्ततःकाव्यनाट्यादिरूपेणानियतेनयेनकेनाप्युपायेनसहृदयहृदयंप्रविष्टाः॥रसेषुचव्यमाणेषुसत्सु॥ संचा
रिणश्चर्व्यमाणायेभावास्तत्त्वमित्यर्थः॥तथाचस्थायिभावप्रकारकारोपविशेष्यीभूतभावत्वमुभयसाधारणंलक्षणमुक्तंभवति॥रसेषु
स्थायिभावेषुविषयेइतस्ततोनुभावाद्यात्मकेकार्येजनयितव्येसंचारित्वंसहकारित्वमित्यपिऋजवः॥व्यभिचारिपदप्रवृत्तिनिमित्त

व्रीडाचपलताहर्षआवेगोजडतातथा॥गर्वोविषादऔत्सुक्यंनिद्रापस्मारएवच॥२॥सुप्तंविबोधोमर्षश्चाप्यवहित्थमथोग्र
ता॥मतिर्व्याधिस्तथोन्मादस्तथामरणमेवच॥३॥त्रासश्चैववितर्कश्चविज्ञेयाव्यभिचारिणः॥त्रयस्त्रिंशत्समाख्याताना
म्नातुव्यभिचारिणः॥इतस्ततोरसेषुसंचारित्वं॥अनेकरसनिष्ठत्वं॥अनेकरसव्याप्यत्वंवाव्यभिचारित्वं॥नचरोमांचादा
वतिव्याप्तिः॥तेषामपिसंग्राह्यत्वात्॥तेचभावाःशारीराव्यभिचारिणएतेचांतराव्यभिचारिणइतीयांस्तुविशेषः॥ स्योभयसाधार

ण्यएवद्वयोर्लक्ष्यत्वंयुक्तमतस्तदेवदर्शयति॥अनेकरसेषुनिष्ठापोषकभावाख्यःसंबंधोयेषांतत्त्वमित्यर्थः॥पोष्यपोषकभावोनकेवलानामे
षामितिवक्तुमन्यदेवतत्पदप्रवृत्तिनिमित्तंदर्शयति॥अनेकरसचर्वणाव्याप्यसामग्रीप्रविष्टत्वमित्यर्थः॥क्वचिद्धिभावादावतिप्रसंगवार
णायभावत्वमत्रापिबोध्यं॥आशयमविद्वान्शंकते॥आशयमुद्घाटयति॥एतेषांलक्षणलक्ष्यतावच्छेदकेस्वशारीरत्वमानसत्वविशेषणा रामः
भ्यांविभिन्नेशारीरभावानांमानसभावानांचावांतरलक्षणलक्ष्यतावच्छेदकेबोध्येइतिवदंति॥इयांस्त्विति॥इयान्परमित्यर्थः॥शंकते॥ ३३

निर्वेदादेरित्यादिना क्रोधभयाभ्याम् विशिष्टयोरमर्षत्रासयोः परिग्रहः॥ स्थायित्वं संतन्यमानभावविशेष्यकारोपप्रकारत्वं॥ व्यभिचारि
त्वं स्थायिभावारोपविशेष्यीभूतभावत्वं॥ कथमिति॥ द्वयोर्विरोधादित्याशयः॥ अन्यादृशव्यभिचारिभावविशेष्यकारोपप्रकारत्वेपि स्थायि
भावांतरप्रकारकारोपविशेष्यत्वस्य रत्यादौ शृंगारस्थायिभावे करुणव्यभिचारिभावात्मनि दृष्टत्वान्न तयोर्विरोध इत्याशयेनोत्तरयति॥ अ
मुमेवाहुः इष्टनाशादेरसाधिककाव्यरसस्थायित्वलक्षणं विशेषमभिसंधायामंगलप्रायस्याप्यस्य प्रथमतउद्देशमनुमनुते स्म भरताचार्यस्तत्राग्रे
वित्तापते॥ ननु तत्र स्त्रीपुंसयोरन्योन्यालंबनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः स्थायिभावः पुत्राद्यालंबनस्तु व्यभिचारिभाव इति न विरोध इति
चेदत्रापि नित्यानित्यवस्तुविचारजन्मा विरागाख्यश्चित्तवृत्तिविशेषो निर्वेदः स्थायिभावोस्तु गृहकलहादिजन्मस्तु स्वावमाननात्मा व्यभिचारी

ननु निर्वेदादेः स्थायित्वं व्यभिचारित्वं च कथमिति चेन्न॥ रसपर्यंतस्थायित्वमितरत्तोगामित्वं चेत्युपाधिभेदमादायोभयसंभ
वात्॥ स्वावमाननं निर्वेदः॥

भवितुमर्हस्येवेत्येवमपि नाम तुष्यतु भवानित्यभिप्रेत्य निर्वेदं लक्षयति॥ इदमुपलक्षणं॥ परमापराध
जन्मा परविनाशहेतुश्चित्तविकारः क्रोधः स्थायिभावः सुद्रापराधजन्मा परुषोक्त्यनुक्त्यादिहेतुरसावमर्षो व्यभिचारिभावस्तथोत्कटानुत्क
टौ मानसौ विकारौ यथायथं भयत्रासशब्दाभ्यां स्थायिभावव्यभिचारिभावावभ्युपगतावितिबोध्यं॥ यत्तोत्सातिकांतर्विकारस्त्रासः स्वाप
राधादुद्भवस्तत्सोभयमितिभेदमाहुस्तन्न॥ तत्रासति॥ ग्रीवाभंगाभिरामं मुहुरनुपतति स्यंदने दत्तदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभया
द्भूयसा पूर्वकायं॥ दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥ इत्यादेर्भीति
रुद्रेभिमताया भयानकोदाहरणताया असंगत्यापत्तेः॥ श्लोकस्तु ग्रीवाया भंगेन प्रवर्तनेनाभिरामं यथा स्यात्तथाऽनुपतति स्यंदने मुहुर्दत्तदृ

ष्टिःशरपतनभयाद्भूयसाविपुलेनपश्चार्द्धेनपूर्वकायंप्रविष्टःश्रमविवृतमुखभ्रंशिभिरर्द्धावलीढैर्दर्भैःकीर्णवर्त्मायंमृगउदग्रप्लुत त्वादस्यंतोऽज्ञानाद्वियतिबहुतरंयथातथोर्व्यांस्तोकंचयथातथाप्रयातियत्तस्यपश्येतिमृगयाविहारिणोदुष्यंतस्यसूतंप्रत्युक्तिंता त्पर्यकः॥तथासत्येवोत्कटधावनक्रियायादर्शनक्रियाकर्मत्वमप्युपपद्यते॥नचक्रियाविशेष्यकबोधांगीकारेणाध्याहारंविनैवैक वाक्यतयापितदुपपत्तिरितिवाच्यं॥प्रकृत्यर्थापेक्षयाप्रत्ययार्थस्यैवप्राधान्यस्यबहुशोदृष्टत्वात्॥क्रियाप्राधान्यप्रतिपादकभूवादि सूत्रस्यभाष्यस्यचकाचित्कानुभवसिद्धक्रियाप्रधानबोधतात्पर्यकत्वात्॥यद्भगवान्पाणिनिःप्रधानप्रत्ययार्थवचनमशिष्यमर्थस्यान्यप्र माणत्वादितिवचनमात्रंप्रत्याचख्यौ॥कथमन्यथायोयःशूद्रस्यपचतिद्विजोन्नंसोऽतिनिंदितइत्यादौक्रियायाविधित्सितनिंदितत्ववि

संसारेहेयताबुद्धिर्वा॥

धानेक्रियाप्राधान्यनियमवादिभिःसमर्थनीयं॥निंदितइत्यस्यक्रियाविशेषणत्वेकर्मत्वापत्तिः॥निंदिताभिन्नद्विजकर्तृकाशूद्रान्नपचि क्रियेतिबोधांगीकारेविधित्सितविधानानुपपत्तिः॥निंदितत्वस्यविशेष्यान्वयिनान्वयित्वस्वीकारेपुनरेकवाक्यताभंगदूषकताबीज विधेयतरसमादरेबहुशोदृष्टप्रत्ययार्थप्राधान्योपेक्षानिर्बीजा॥निंदितमितिक्रियाविशेषणपाठांतराध्याहारेचप्रस्थितमितोऽप्येकवाक् तयेतिमृद्वान्नपक्ताद्विजोनिंदितइतिप्रथमांतविशेष्यकएवतत्रबोधोऽभ्युपेयइतिनतद्वाक्यंनियमपरमपितुन्यायमूलमित्यास्तांपादा नांपंथाः॥विशेषावगतेर्निर्वेदस्थायिभावमप्यत्रैवलक्षयति॥नन्वेवमपिव्यभिचारिण्यारतेरगणनान्न्यूनतापत्तिरन्यथापुत्रादिवि षयकरतिस्थायिभावकंवात्सल्याख्यरसांतरंप्रत्याख्यातुमशक्यमेवशांतरसवदितिचेन्न॥रतिस्थायिभावगणनयैवतद्गणनान्निर्वेदस्याभि

रतेरत्रनिर्वेदस्यतत्रगणनापिकर्तुंशक्यतइतितथैवकिंनकृतमितिनियोगस्यमहर्षिप्रतिलतितरांकर्तुमनुचितत्वात्॥अशोकवनि
कान्यायादेवान्यंप्रत्यपि॥विभावानुभावावेवात्रव्यंजकौनत्वेकस्मिन्व्यभिचारिणिध्वन्यमानेव्यभिचार्यंतरंव्यंजकतयापेक्ष्यतेतस्यैव
प्राधान्यापत्तेरतस्तावेवदर्शयति॥अनुभावइत्यत्रापितत्रेत्यनुषज्यते॥तत्रेतिषष्ठ्यर्थेसप्तमीप्रकृतस्यनिर्वेदाख्यव्यभिचारिभावस्ये
त्यर्थः॥एवमग्रेपि॥तत्त्वज्ञानंगृहकलहादि॥तदुक्तं॥तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदःस्वावमाननमिति॥नहिमुख्यतत्त्वज्ञानंस्वावमानन
हेतुः॥निर्वेदस्यापिभावविभावंतुशांतरसकथावसरेग्रंथकृदेववक्ष्यति॥स्थायिनोपिव्यभिचारितयातत्रैवमुख्यतत्त्वज्ञानपदार्थो
विभावइतितुसर्वानुमतःपंथाः॥इदमत्रातिरहस्यमनुसंधेयं॥कस्मिंश्चिद्व्यभिचारिभावेप्रकरणवशात्स्वीयसर्वसामग्रीव्यंग्यतयाप्राधा

तत्रविभावास्तत्त्वज्ञानापदीर्ष्यादयोनुभावाःखेदप्रकाशाश्रुपानादयः॥यथा॥सोणीपर्यटनंश्रमायविहितंवादायविद्यार्जि
तामानध्वंसनहेतवपरिचिनास्तेतेधराधीश्वराः॥

न्यंगत्वेसतिनांतरीयकत्वादन्यदीयस्वल्पसामग्रीव्यंग्यत्वेनतन्निमानभावह
तोन्यस्यव्यभिचारिभावस्यप्रधानीभूतव्यभिचारिभावगुणीभावोपिननिषेध्यः॥यथागर्वोदावमर्षस्यामर्षादौवागर्वस्य॥नचैवंसतितादृश
भावकाव्यस्यगुणीभूतव्यंग्यत्वापत्तिरितिवाच्यं॥गुणीभूतंभावांतरांगीभूतंव्यंग्यंपृथग्गुणत्वतविभावानुभावव्यक्तचर्वणाविषयीभूतंयत्रेत्यर्थ
त॥नांतरीयकस्यविभावानुभावौतुनपृथगुपत्तावितिनगुणीभूतव्यंग्यत्वंविभावोप्यस्यनिमित्तकारणमात्रंनतुरसस्येवसर्वथैवालंबनोद्दी
पनेपत्रापेक्षिते॥यदितुक्वचित्तेअपिसंभवतस्तर्हितत्रापिनकस्यापिविद्वेषइति॥कुज्ञानेनमोहमूलकभ्रमशालिनामयासोणीपर्यटनंनाना
देशसंचारःश्रमायसिध्यतोप्यभिलषितार्थस्यवासनापरिपूरकत्वाभावात्तत्सायावर्धिष्णुत्वादित्याशयः॥विहितंकृतंविद्यातर्कतंत्रादिर्वा

ते ते हंकारतिरस्कृतनिखिलप्रपंचाधराधीश्वराः पृथ्वीपरिवृढामानध्वंसनहेतवे ऽपमाना यपरिचिता अनुसृता गुणग्राहकासंगतेरिति
भावः॥ सरोजसुंदरदृशा पद्ममनोहराक्षीणामास्येमुखे दृष्टयः साभिलाषवीक्षणानि विश्लेषाय वियोगोद्भूतदुःखानुभूत्यै कृताः प्रेरिताः
सदासंभोगोत्कंठायाः स्वानुवृत्तेरिति भावः॥ परंतु प्रयागनगरे नारायणो नाराधिना पूजीति तल्लक्ष्मणोक्तिः पद्यतः कुटुंबनायकस्योक्तिरि
यं॥ अत्रापदादिविभावितश्चिंताद्यनुभावितो निर्वेदश्चर्वणाविश्रामधाम॥ तथा चेदं भावकाव्यमिति गीयते॥ रसकाव्ये भावप्रतीतावपि स्था
यिभाव एव चर्वणाविश्रामधाम॥ भावानां तत्र स्वासाधारणरूपेणाभानादिति स्मर्तव्यं॥ यत्र च स्वासाधारणरूपेणापि भावो लंकाराद्यंगत
याभासते तत्राप्यसौ न भावपदव्यवहार्यः॥ किंतु तदलंकारकाव्यमेव॥ यथा मम॥ पातु प्राघुणिको निजां तृणकुटीं गंताध्वगं दंडवच्चेतस्त्वस

विश्लेषाय सरोजसुंदरदृशामास्ये कृता दृष्टयः कुत्रानेन मया प्रयागनगरे नाराधि नारायणः॥

रिपालितां दिशमिमां चीनांशुवद्धावति॥ श्रीमच्छासनसेविभिः कतिपयैः सूत्रैर्विवर्णैरपि स्वीयैर्यंत्रितमध्वगैरिदमिव स्वास्थ्यं तदा
लंबतामित्यत्र पूर्णोपमा मुख्या प्रभुविषयकरतिभावो गुणः॥ यथा वा ममैव॥ योभिन्नदिक्क उभयोस्तर्यवरोहो ऽमुना च या तुलना॥ स्वकुटुं
बदैवयोगाज्जातं तत्काकतालीयमित्यादौ काकागमनसदृशविशिष्टतालपतनसदृशं समासार्थस्तदुत्तरकप्रत्ययस्य सदृशोर्थस्तत्रैवेत
दधिकारसूत्रस्थेवप्रत्ययार्थैकदेशे सादृश्ये प्रतियोगितया प्रकृत्यर्थान्वयस्य योग्यतासंपत्तये काककृततालफलतुलना याः प्रकृतेर्लक्षणाप्र
कृतिशक्यार्थस्य कप्रत्ययार्थसदृशे प्रयोज्यतया न्वय इति स्थिते कालिकसामानाधिकरण्यसंबंधेन काकागमनसदृशे ककर्तृकतर्यवरोह
विशिष्टतालपतनसदृशापरकर्तृकतर्यवरोहप्रयोज्या काककृततालफलतुलना प्रतियोगिकसादृश्यवतीतयोस्तुलनेति शाब्दबोधात्काका

गमनस्यतालपतनस्यचकाककृततालफलतुलनायाश्चोपमानस्यानुपादानाल्लुप्तोपमामुख्या॥क्वचित्काककृततालफलोपभोगेक्वचि
त्तालफलकृतकाकवधेलक्षणेत्वत्रोपमेयविशेषसमभिव्याहारस्तात्पर्यग्राहकोभवतिप्रकृतद्दव॥स्वकुटुंबदैवयोगादित्युक्तविम
नस्कतानुभावितोगम्यजीवनसंशयविभावितोपिविषादोलुप्तोपमायांलीनः॥ग्लानिंलसयति॥निर्बलताधातुपाटवाभावः॥तस्याम
नोधर्मत्वाभावादाह॥व्याध्यादिप्रभूतवैवर्ण्यादिकृतदुःखविशेषावेत्यर्थः॥नचैवंनिर्बलतोक्तिरसंबद्धप्रलापःस्यादितिवाच्यं॥बलहा
निसामानाधिकरण्यप्रत्यायनेनबलसमानाधिकरणश्रमपार्थक्यसमर्थनार्थत्वात्॥हरौश्रीकृष्णेप्रातरुषसितल्पपर्यंकमपास्यत्यक्त्वा

ग्लानिर्निर्बलता॥निःसहतावा॥तत्रविभावाः॥रत्यायासतृट्क्षुधादयोनुभावावैवर्ण्यशैथिल्यदृग्भ्रमणादयः॥यथा॥व्या
हर्तुंपुनरीक्षणायनगिरःकंठाद्बहिर्निःसृताःशेषाश्लेषविधिंविधातुमपिवानैवोन्नतादोर्लता॥प्रातस्तल्पमपास्यगच्छ
तिहरौचंडांशुचंडातपक्लिष्टश्लिष्टकुरंगभंगुररुचस्तस्याःस्थिताहृष्टयः॥उत्कटकोटिकानिष्टप्रतिसंधानमिष्टहानिवि
चारोवाशंका॥तत्रदुर्नयपरक्रौर्यादयोविभावाअनुभावाःकंपक्रियाप्रच्छादनादयः॥

गच्छतियातिसतितस्याराधायागिरःपुनरी
क्षणायपुनर्दर्शनंवितरीतुंव्याहर्तुंप्रार्थयितुंकंठाद्बहिर्नैवनिःसृतास्तथातस्यादोर्लतापिशेषाश्लेषविधिंसंभोगांगपारितोषिकालिंगनंविधातुं
कर्तुंनैवोन्नताजातेतिशेषः॥किंतुतस्याहृष्टयश्चंडांशुरितिचंडांशोःसूर्यस्यचंडेनोग्रेणातपेनालसेनक्लिष्टस्याभिभूतस्यश्लिष्टःसंबद्धः कुरंगो
हरिणोयस्मात्तादृशस्यचंद्रस्येवभंगुराभंगशीलारुचःकांतयोयासांतथाभूताःस्थिताआसन्नित्यर्थः॥अत्ररत्यायासविभावितावैवर्ण्याद्यनुभावि
ताग्लानिसर्वस्वविश्रामधामाशंकांलसयति॥इष्टहानेरप्यनिष्टांतर्गतत्वादत्रवाकारःसंग्रहीतविवेकापेक्षोपन्यस्तइतिबोध्यं॥अतएवविभा
वानुभावौयथायोगंदर्शयति॥

र.त. वामनयनेतेभूयोनुभूतागुरुजनाः श्वशुरादयश्चित्तविलोचनाश्चित्तं परकीयांतःकरणं विलोचयंति जानंति नादृशमज्ञादिति पराशयवेदि नौका
३६ न इति यावत्॥ सहकार्येतरमप्यहमहमिकान्यायादवतरतीत्याह खलाइति पिशुनाइत्यर्थः जिह्वाग्रदोषाः जिह्वाग्रएवदोषः परकीयइत्य
र्थो येषां तादृशाः परकीयदोषोद्घाटनरसिकाइति यावत्॥ पौराजानपदाः॥ क्रूरेति॥ मर्मस्पृग्यो वचःप्रपंचो वाग्विभवस्तेन यशः ख्यातिर्ये
षां तादृशाः परकीयनिंदाव्यसनिन इति यावत्॥ नन्वंतःसाक्षिभूतयाश्वश्र्वासर्वेतवानिष्टं परिहर्तव्यमित्याशंक्याह॥ श्वश्रूश्चेति॥ चस्त्वर्थे॥
चक्षुःश्रवाश्रुतमात्रार्थग्राहिणी॥ तथाचपरप्रेरितप्रज्ञस्यस्वक्षणक्षीणसंस्कारस्यपरोपन्यस्तसाधकबाधकमानापादितवितथभावकाव्यस

यथा॥ एनेचित्तविलोचनागुरुजनाजिह्वाग्रदोषाः खलाः पौराःक्रूरवचःप्रपंचयशसःश्वश्रूश्चचक्षुःश्रवाः॥ किंस्यादित्यमन
र्थबीजमसकृत्त्वं विंध्यवल्लीरुहिस्फूर्जत्किंशुकदामवामनयनानिःश्वस्य विन्यस्यति॥ परो ~ त्कर्षासहिष्णुता॥ परानिष्टचिकीर्षा
वासूया॥ तत्रविभावामन्युदौर्जन्यादयः॥ अनुभावाःकोपचेष्टादोषोद्भावनादयः॥

कस्यदुःप्रतार्यतैवेत्याशयः॥ यद्वा चक्षुःश्रवाव
धिरा॥ तथाचदृष्टान्यथाशंकमानासैवप्रतारणायाअविषयइति भावः॥ इत्थमेवं सति किंस्यात्कोनर्थ आपतेदिति एवंरूपमसकृद्वारंवारम
नर्थबीजमुत्कटानिष्टासाधारणोपायं विंध्यस्थलावल्लीरुहिस्तनेस्फूर्जत्किंशुकदामभासुरपलाशकुसुमाभरणं निःश्वस्यश्वासमनु
त्वाविन्यस्यति न खलु संगोपनाय स्थापयतीत्यर्थः॥ अत्रस्वीयदुर्नयपरक्रौर्यादिविभाविताक्रियाप्रच्छादनानुभाविताशंकाचर्वणाविश्रा
मधाम॥ असूयालक्षयति॥ एतेनपरोत्कर्षासहिष्णुत्वपदव्यवहार्यत्वं लक्षणमुक्तं भवति न त्वव्यवहार्यतावच्छेदकाग्रहे दुर्ग्रहमिति ल राम:
क्षणांतरमाह॥ भवानीतुषारभानोः हिमरश्मेः काप्यनिर्वचनीयप्रभावाकलाकलेवकलायथाकलासर्वस्वापत्नीकरोति तथासावपिश ३६

मयापि प्रेमभरेणाङ्गीकृतयापीत्यपिशब्दव्यापारः॥ अलभ्यवासेऽलभ्यो दुःप्रापो वासः स्थितिर्यत्र तथाभूते हरशिरसि निवसति नि
रपायं तिष्ठतीति विधुंतुदस्य चंद्रस्य षोडशकलापूर्णस्यापीत्यर्थः शक्त्याप्यर्थोपादनसमर्थस्य राहोर्मूर्तिं चित्रं प्रतिभवनं भवने भवने प्र
तिभूधरं भूधरे भूधरे लिखति वर्णिकाभी रचयतीत्यर्थः॥ अत्र चंद्रकलाया हरशिरोधिश्रयणप्रभव चंद्रकलाविषयकमन्युविभावित
चंद्रकलाग्राससमर्थराहुप्रतिमायाः सर्वत्र लेखनरूपकोपचेष्टानुभाविता चंद्रकलाविषयासूयाचर्वणाविश्रामधाम॥ मदं लक्षयति॥
उत्कर्षास्य जातिविशेषपरिचयाय तद्व्यंजकमाह॥ सुखानुभव इत्यस्य सुखानुभवनियत इत्यर्थान्नोत्कर्षो जातिविशेष इत्यग्रिमग्रंथ

यथा॥ हरशिरसि मयाप्यलभ्यवासे निवसति कापि कलातुषारभानोः॥ इति लिखति विधुंतुदस्य मूर्तिं प्रतिभवनं प्रतिभू
धरं भवानी॥ हर्षोत्कर्षो मदः॥ दुःखासंभिन्नसुखानुभव उत्कर्षः॥ तत्र विभावः पानमनुभाव उत्तमानां निद्रा मध्यमानां ह
सितमधमानां रोदनं॥ इंद्रियमोहरूपात्र निद्रा॥ तस्मादिंद्रियसंमोहे नयनघूर्णनसाम्येन निद्रेव निद्रा॥ न च हर्षव्यभिचारि
भावेतिव्याप्तिः॥

विरोधानवाततत्साक्षात्कारेतिव्याप्तिः॥ अयं च मदस्त्रिविधः॥ तरुणमध्यमाधमभेदात्॥ अव्यक्तासंगतवाक्यैः सु
कुमारस्खलद्गत्या च योऽभिनीयते स प्रथमः॥ भुजाक्षेपातिस्खलितघूर्णितादिभिर्योऽभिनीयते स द्वितीयः॥ गतिभंगस्मृतिनाशहिक्काछर्दा
दिभिर्योऽभिनीयते स तृतीय इति बोध्यं॥ अत्र पुरुषप्रकृतिभेदादनुभावो विलक्षण एवेति विशेषं दर्शयति॥ मुख्यनिद्रापदार्थस्यानुभवबा
धितत्वाद्गौणार्थपरतया गौणमेव निद्रापदमिति दर्शयति॥ पदं गौणत्वजीवातुमुख्यार्थसादृश्यं विवक्षितार्थनिष्ठं दर्शयति॥ उत्कर्षपदप्रयो
जनं वक्तुमुपक्रमते॥ न तु तत्रेति॥ हर्षात्मकव्यभिचारिभाव इत्यर्थः॥ उत्कर्षो जातिविशेषः॥ उत्कर्षपदव्यवहार्यो जातिविशेषः॥

एकस्यैव व्यभिचारिभावस्यावांतरोपाधिरूपोत्कर्षापकर्षभेदेन द्वैविध्यमेव किं न स्यादत आह ॥ तत्र लक्षिते मदव्यभिचारिभावे ॥ मोह इति ॥ मोहपदव्यवहार इत्यर्थः ॥ यदाहुरभियुक्ताः ॥ संमोहानंदसंदोहो मदो मद्योपभोगतः इति ॥ अत्र मदलक्षणातिव्याप्तिशंकाविषये हर्षव्यभिचारिभावे ॥ प्रसाद इति ॥ प्रसादपदव्यवहार इत्यर्थः ॥ तच्चोक्तमभियुक्तैः ॥ देवभर्तृगुरुस्वामिप्रसादः प्रियसंगमः ॥ मनोरथाप्तिरप्राप्यमनोहरधनागमः ॥ समुत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ॥ नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥ अश्रुस्वेदादयश्चानुभावा हर्षे तमादिशेदिति ॥ नन्वत्र प्रसादाख्योऽनुभावः प्रदर्शितो न तु हर्ष एव प्रसादपदेन व्यवहृत इति कथमुपष्टंभकमेतदिति चेत् ॥ वक्त्रप्रसादपदा

तत्र हर्षमात्रसत्त्वान्न तु तत्रोत्कर्षो जातिविशेषः ॥ किंच तत्र मनसो मोहोऽत्र च मनसः प्रसाद इति स्वरूपभेदात् ॥ तत्र निद्रारोदनादयोऽत्र च पुलकादयोऽनुभावा इत्यनुभावभेदाच्च ॥ ननु तिष्ठ तिष्ठ क्षणं मूढ मधु यावत्पिबाम्यहमित्यादौ वीररसेऽपि मदो दृष्टोऽस्ति तत्र निद्रारोदने वा कथमनुभावौ न हि योधः संप्रति निद्राति रोदिति वेति चेत् ॥ सत्यं रसभेदेनानुभावभेदः शृंगारे तेऽनुभावाः वीरे नयनारुण्यचमत्कारादयः ॥

र्थस्तेजोविशेषो नेत्रप्रसादपदार्थश्च स्वस्थताविशेषस्तस्य प्रसादरूपांतरविकारप्रभृतत्वरूपोपाधिकृत एव प्रसादपदव्यवहारो नान्यथा तथा सत्यननुगमापत्तेरित्यनुजानीहि ॥ इति ॥ एवं रूपकार्यवैचित्र्यात् ॥ स्वरूपभेदात् ॥ उत्कर्षापकर्षत्वदुक्तमादायैव पार्थक्यांगीकारादिति भावः ॥ रसैक्येऽप्यनुभावभेदो हर्षमदयोः पृथग्व्यभिचारिभावत्वं गमयतीत्याह ॥ ननु पानादिप्रभववीररसपरिपोषकमदानुभावत्वासंभवात्कथं निद्रारोदनादेर्मदानुभावत्वमित्याशंकते ॥ एकस्यैव व्यभिचारिभावस्य रसभेदनियतानुभावभेदसंभवान्न निद्रानुभावकमदान्नयनारुण्यानुभावकमदस्य विभिन्नव्यभिचारिभावतावक्तुंयुक्तेति समाधत्ते ॥ रसभेदेप्य

न्यूनतां पृथगुदाहरणश्रमं च परिहर्तुं सामान्यतोनुभावं गम्यमनुसृत्य सामान्यीभूतं विभावंव्यंजकमुपादायैव द्विविधमपि मदं स्वाभिधानसौष्ठवमावेदयन्नुदाजहार ॥ असाने स्मत्सजातीया रसना स्वयमेव मधुरस्यति स्वदते स्माकं जनुर्जन्मानर्थकमिष्टानवाप्तेरितिहेतो स्तत्र मधुनि समस्तमिंद्रियं प्रतिबिंबस्य मिषेण मज्जतीति गम्योत्प्रेक्षा द्रवादेरभावात् ॥ पानसमकालसंजातमदेन जातान्नयनघूर्णनास्यानस्य विरमनुवृत्त्यादीर्घकालं सर्वेंद्रियाणामाभिमुख्यं जातमिति मज्जतीत्येतदाशयः ॥ अत्र पानं विभावितो गम्यास्तु घूर्णनानुभावितो मदश्चर्वणाविश्रामधाम ॥ बलविरोधिन्या ग्लानेः सकाशाद्बलाविरोधित्वप्रतिपादनेनास्य भेदं दर्शयन्श्रमं लक्षयति ॥ सर्वं

सामान्येन च मदेन नयनघूर्णनवचनस्खलनादयश्चेति ॥ यथा ॥ रसना रसयत्यसौ मधु स्वयमस्माकमनर्थकं जनुः ॥ इति तत्र समस्तमिंद्रियं प्रतिबिंबस्य मिषेण मज्जति ॥ आयासप्रभवः पराभवः श्रमः ॥ तत्र विभावा रत्यध्वगत्यादयोनुभावाः स्वेदादयः ॥ यथा ॥ सरामचंद्रः सहनिर्गतायाः स्वेदांबुसंसक्तपयोधरायाः ॥

वाक्यं सावधारणमिति न्यायादायासादेव न तु बलहानेः प्रभव उत्पत्तिर्यस्येति व्युत्पत्त्या बलहान्यनन्यत्वात्तत्प्रतिषेधस्यैव प्रत्युतैवकारेणोक्त्या बलसमानाधिकरणत्वमेतद्विशेषणतात्पर्यविषयोर्थो प्रतिषिद्धं प्रतिषिद्धप्रतिद्वंद्विभावश्यमनुमतं भवतीति न्यायानेनेतत्र नातिव्याप्तिः ॥ पराभवः खेदनामा दुःखविशेषः ॥ अत्र रामो योगिमनो विश्रामधामभूतः ॥ चंद्रः ॥ सकलानामप्याल्हादजनकत्वात् सहनिर्गताया अत एव स्वेदांबुसंसक्तपयोधराया एतेन चंडांशुसंपर्कजन्यस्वेदस्य कथमांतरविकारानमापकते त्याशंकापरिहृता मिथिलात्मजाया अशेषान्विकृतानविकृतां श्रमानपांगपातैः कृत्वा शिथिलीचकारेत्यपव्याख्यानं ॥ यत्तदोर्नित्यसाकांक्षतया यच्छब्दसानध्याहृतत्वात् ॥ प्रसिद्धिपरतदो बुद्धिस्थे शक्ततया न यच्छब्दसाकांक्षतेति चे

र·त· तथापिसहशब्दस्यतृतीयायोगोननिर्दिष्टएव॥येनेत्यध्याहृत्यदूषणद्वयमुद्दिधीर्षुणापिकस्यापांगादृतिशाब्दोह्याकांक्षानपूरितेवश्री नोका
३८ मता॥भावानांहिरूढस्साध्यत्वमिवकृत्यनाश्यत्वमपिसर्वैरेवालंकारिकैरभ्युपगतं॥इत्थंचशिथिलीचकारेत्यस्ययोग्यत्वमपित्वन्मतेदु
र्घटं॥श्रमस्यश्रमपदेनैवनिवेदनाद्गमनाख्यदोषोपिदुरुद्धरएवतथाव्याख्यानइतिनकिंचिदेतत्॥तस्याश्चस्यापांगपातैःसहनिर्गता
याद्दष्टिपूतंन्यसेत्पादमितिनीतिरीत्यनुसारेणयत्रैवदेशेमंतुरामेणोत्क्षिप्तंममश्रमाकलनात्सहगंतुमाप्रतिषिध्यादितिमत्वाश्रमाभाव
द्योतनायतत्रदेशेपुरएवधावंत्याएतावतैवचस्वेदांबुसंसक्तपयोधरायाअप्रतिबध्यस्वेदयुक्तपयोधरयुगलायाःस्वेदस्यशिरःक्र
मेणादयान्मध्यमंश्रममावेदयतिपयोधरग्रहणं॥मिथिलात्मजायामिथिलानामजनकपुरीतस्यातिजनकोपिमिथिलस्तस्यात्मजा

अपांगपातैर्मिथिलात्मजायाः श्रमानशेषाञ्छिथिलीचकार ॥

कन्यायद्वामिथिलानामकनगर्याएवात्मजातस्याअशेषान्सर्वान्श्रमानितितत्कारणेतत्वोपचारान्मार्गकाठिण्यादीनित्यर्थः॥सरा
मचंद्रःशिथिलीचकारएथीयाञ्जाप्यनिवारयामासेतिव्याख्येयं॥मुक्तंचैतत्॥रसमंजर्यामनुकूलनायकंस्वयमेव॥एष्वित्वंभवकोम
लादिनमणेत्वंशेत्समंगीकुरुत्वंवर्त्मल्लघुतांप्रयाहिपवनत्वंस्वेदमुत्सारय॥सांनिध्यंश्रपदंडकाननगिरेनिर्गच्छमार्गाद्बहिःसीता
सोविपिनंमयासहयतोनिर्गंतुमुत्कंठतेइत्युदाहृतवतातानेतानेवश्रमस्यविभावाननुभावांश्चश्रमत्वेनाध्यवस्यतैवानेनग्रंथकृताब
हुवचनांतश्रमपदस्यसमभिव्याहारेणाशेषपदममुष्मिन्नुपबद्धं॥अन्यथातदानर्थक्यप्रसंगात्॥एतदेकवाक्यतामवगंतुमेवचासीत्तत्र रामः
स्वेदमितिवाक्यमाहत्योपनिबबंध॥अपिचक्वचिदपिभावस्यस्वशब्देनाप्रतिपादयताश्रमभावोदाहरणेश्रमपदेनश्रमःप्रतिपादितस्त ३८

सर्वसंमतनिबंधकर्तरितयामंतुमंतुमवमंतुंतत्स्त्रींभावादन्यदुत्तरंदुरुत्तरमेवेतिभावुकतयाजोषमास्यतइत्यपमास्माकीनःपंथाः॥
केचित्तुश्रमानशेषानित्यस्यस्थानेपयःकणास्तानितिपठित्वाश्रमोदाहरणमश्रमेणैवयोजयंति॥तच्चिंत्यं॥उक्तरीत्याश्रमस्थानेस्था
नेश्रमएवेतिपुनरत्रत्रिधाचिंताबीजं॥तथाहि॥श्रमपदस्थानेश्रमपदमेवयुक्तं॥अन्यथाश्रमपदघटितपाठेऽनुदाहरणताशंका
कष्टमापतेत्॥तच्चायुक्तं॥लक्षणाकष्टंचसप्रयोजनतयाप्रामाणिकमित्यनुपदमेवव्यक्तीभवितेतिविदुषांपरामर्शः॥अन्येतुविभा
वादीनांसाधारण्येप्यभिचारिणांपदवाच्यत्वंनदोषइत्यूचुः अत्राध्वगतिविभावितःस्वेदानुभावितःश्रमश्चर्वणाविश्रामधाम॥आलस्यं
लक्षयति॥नचानुपदोक्तग्लानौवक्ष्यमाणजडतायांचातिव्याप्तिरितिवाच्यं॥बलसमानाधिकरणत्वेवश्यकर्तव्यार्थप्रतिसंधानसमा

उत्थानात्ययस्समत्वमालस्यं॥विभावागर्भादयोनुभावाःक्रियाकातर्यादयः॥यथा॥हरंहरंतंस्तनहारयष्टिंकरेणरोद्धुंनशशाककता
न्तत्॥गिरेःसुतागर्भवतीविहस्यदृगंचलंकांतरयांचकार॥

नाधिकरणत्वेचसतिक्रियानुन्मुखत्वमित्यर्थात्॥ग्लानौबलसमानाधि
करणत्वाभावाज्जडतायांचावश्यकर्तव्यार्थप्रतिसंधानाभावात्तयोर्व्युदासः॥केचित्तुनिखिलांरजनींप्रियेणदूरादुपयातेनविबोधिताकथा
भिः॥अधिकंनहिपारयामिवक्तुंसखिमाजल्पतवायतारसज्ञेत्येवमादिशीस्योदाजह्रुः॥तच्चश्रमसंकीर्णं॥ननुप्रियकर्तृककथानांप्रियाश्र
माहेतुत्वात्कथंतत्रश्रमइतिचेल्लज्जापारतंत्र्येणविवक्षितसुरतादेःस्वशब्देनप्रतिपादयितुमशक्तयाकथाभिरित्यविवक्षितवाच्यंनिर्दिष्टं
तथाचरतिप्रभृतःश्रमस्तत्रागतयाप्यवश्यमुत्तिष्ठतइतितदसंकीर्णालस्योदाहरणतामाविष्कर्तुमसाधारणंगर्भरूपविभावमाचष्टेगर्भ
वतीति॥गिरेर्हिमालयस्यसुतापार्वतीप्रेमातिशयेनविहस्यदृगंचलंकांतरयांचकारविबलयतिस्मपरंतुस्तनहारयष्टिंहरंतंकरेणरोद्धुंध

अत्रगर्भेविभावितंदृगंचलविवलनेनहरनिरोधप्रवृत्याचानुभावितमालस्यंचर्वणाविश्रामधाम॥दैन्यंलक्षयति॥दुरवस्थासाध्यांतःक
रणवृत्तिरित्यर्थः॥दुरवस्थासाध्यावस्थांतरेमानाभावमभिप्रेत्याह॥दुःखातिरेकइति॥दुःखोत्कर्षइत्यर्थः॥शोकव्यावर्तनायातिरेकइति
मतांतरमाह॥निरुक्तदुःखातिरेकस्यानौज्वल्यपदार्थत्वमेवन॥मालिन्यस्यतत्पदार्थत्वेपिनतस्यांतःकरणधर्मत्वमित्यभिप्रेत्यैतन्मतंदू
षयति॥एतेनदौर्गत्यादेरनौजस्यंदैन्यंमलिनतादिकृदितिप्राचोनिरुक्तिमत्रोपोद्बलतयायोजयंतःपरास्ताः॥तत्रमालिन्यस्यानुभाव
तयापृथङ्निर्देशोनौजस्यपदस्यांतःकरणवृत्तौतात्पर्यग्राहयस्तस्याअस्मदुक्तानर्थांतरपरतामेवावगमयतीति॥बहिर्विषयत्वेनानं

दुरवस्थादुःखातिरेकोवादैन्यं॥अनौज्वल्यमितिकेचित्॥तन्न॥तस्यबहिर्विषयत्वेनतदनुभावत्वात्॥तत्रविभावाःकाय
क्लेशक्षुत्पीडादयः॥यथा॥तातचरणानां॥अंसेकुंतलमालिकास्तननतटेनेत्राम्भसानिम्नगामाद्यन्मन्मथकुंजरेंद्रदशनप्रांते
विलग्नंमनः॥किंचान्यद्विरहानलेनसरसंसंदह्यमानंवपुर्गंडेपांडिमकेतवेनसुतनोःफेनोच्चयंमुंचति॥ तःकरणधर्मत्वेस

तिव्याप्तिपक्षधर्मतयाज्ञातत्वेन॥तदनुभावत्वादिति॥एतेनदैन्यानुभावाप्रदर्शनप्रयुक्तंदैन्यमपाकृतंवेदितव्यं॥केशपाशस्नग्दहनोपे
क्षणात्कुंतलमालिकांसेविलग्नेतिलिंगविपरिणामेनान्वयः॥एवमग्रेपि॥स्तननतटइत्यत्रतटग्रहणंनिम्नगायाअपिपूरोत्कर्षवत्त्व
मतिशयोक्तिः॥माद्यंस्तरुणोमन्मथएवकुंजरेंद्रोसमीक्ष्यकारित्वात्तदुद्धतत्वाच्चतस्यदशनोविषयासिद्धिप्रयुक्तदुःखात्मकत्वलव
दनिष्टकारणत्वात्तत्वेनाध्यवसितोमनोरथस्तस्यप्रांतेमुख्यदुःखकारणत्वात्तत्वेनाध्यवसितस्तस्यविषयस्तत्रमनोविलग्नमासक्तं॥ए
तेनेच्छानुरूपोविषयःकदाकस्यभविष्यतीतिन्यायान्मनोरथभंगोप्यनुभावोदर्शितः॥अन्यच्चकिंब्रूमोविरहानलेनसरसंप्रेमार्द्रंसंदह्य

शरीरमाद्रोल्लुकमिवगंडेगंडस्थलेपांडिम्नः छलेनफेनोच्चयंडिंडीरोत्करंमुंचतिबहिः करोतीत्यर्थः॥ अत्रविश्लेषपीडाविभावितमनो
ज्वल्याद्यनुभावितंदैन्यंचर्वणाविश्रामधाम॥ चिंतांलक्षयति॥ उक्तार्थेऽनुशासनंप्रमाणयति॥ स्मृत्यतिप्रसंगंवारयति॥ स्मृतौनतुतद
न्यत्वमितिनातिव्याप्तिरितिभावः॥ व्यक्तीभविष्यतिचैतदुपरिष्टात्॥ विवक्षितार्थंविशदयति॥ एकमात्रप्रवणत्वेतियावत्॥ हेशै
लराजतनयेशंभुंध्यायस्यंतःस्वापयस्यन्यथावमनाख्यदोषायते॥ किंनामजानीमहइतिचेवशब्दःसंभावनायामेवात्रापयति
ननूपमायांसंभावनायांचवास्तविकशंभुसत्त्वेवक्तुमुचितेतिचपरिस्पजध्येधातोश्चिंतार्थकताग्रहं॥ ननुस्थिस्यर्थकोधातुःकिम

चिंताध्यानं॥ ध्यैचिंतायामित्यनुशासनात्॥ ध्यानंचनस्मरणात्मकं॥ स्मृतिभावस्याग्रेपृथक्कथनात्॥ किंतुचिंतै
काग्र्यं॥ तत्रविभावाः॥ इष्टानवाप्तिप्रभृतयः॥ अनुभावाः॥ तापवैवर्ण्यबाष्पश्वासादयः॥ यथा॥ शंभुध्यायसिशैलराज
ननयेकिंनामजानीमहेतस्यैवाक्षितनूनपादिवतनोस्तापःसमुन्मीलति॥ अक्ष्णोरश्रुमिषेणगच्छतिबहिर्गंगातरंगा
वलिःपांडिम्नःकपटेनचंद्रकलिकाकांतिःसमुज्जृंभते॥ नेननाकर्णितोयद्दमनाख्यदोषाशंकाकलंकिनममुमेवप्रायुंक्ते

तिचेद्भावनाकलनान्मावमंस्थामान्यान॥ वद॥ सकलकविकुलतिलकायमानैर्भट्टश्रीनारायणसिंहविशारदेवप्रभृतिभिर्वर्णितासंहा
रमुद्राराक्षसमुख्येषुनाटकेषु॥ सत्यस्तामधुरगिरःप्रसाधिताशामदोद्धतारंभाः॥ निपतंतिधार्तराष्ट्राःकालवशान्मेदिनीपृष्ठे॥ क्रूरग्रहः
सकेतुश्चंद्रमसंपूर्णमंडलमिदानीं॥ अभिभवितुमिच्छतिबलाद्रक्षत्येनंतुबुधयोगइत्यादिभिर्यदमंगलप्रायकथाभिरुपक्रमःकृतस्त
याविधानामेवचनाम्नासंकेतश्चकृतस्तत्किमन्यथानजानंतिते॥ अथतत्रसंधानाभिभवश्रवणोद्दीपितक्रोधयोर्भीमकौटिल्ययोःप्रवे

शास्त्रविकासावबकथ्येनितयैवोपक्रमोविषया

कलनायचतत्तन्नाम्न एवसंकेतश्चाभिमतइति चेदष्टाध्याय्यांमुखनासिकावचनोऽनुनासिकइतिसूत्रवत्संचाध्यास्यांसाध्वनिर्देशः
प्रतिज्ञेतिसूत्रवच्चवृत्तोदाहरणतायाआपततोवगतयेत्रापिक्वचित्क्वचिदग्रेपिसधातुर्वेढइत्यांदोलितेनमूर्ध्नानुमन्यस्व॥प्रकृतम
नुसराम:॥किंनामवितर्के॥वयंतथाजानीमहेयतस्तस्यैवशंभोरेवासितनूनपाल्लोचनाग्निरवितत्वेनसंभाव्यमानस्तापउग्रत्वात्तनोरु
न्मीलत्युदेति॥अस्याः सकाशादस्त्रमिषेणगंगातरंगावलिरन्तापितस्यैवेत्यनुषज्यते॥एवमग्रेपि॥बहिर्गच्छत्याधिक्यात्सांडिम्न:
कपटेनचंद्रकलिकाकांतिःसकलाल्लमुज्जृंभतेप्रकाशतइत्यर्थः॥अत्रेष्टानवाप्तिविभाविनातापवैवर्ण्याद्यनुभाविताचिंताचर्वणा

मोहोवैचित्यं॥मुहवैचित्यइतिधातोर्मोहनंमोहइतिभावव्युत्पन्नोमोहशब्दः॥वैचित्यंकार्याकार्यापरिच्छेदः॥तत्रवि
भावा:॥भीत्यावेगानौचित्यादयः॥अनुभावास्तंभपातघूर्णनादर्शनविस्मरणादयः॥यथा॥अंतःस्मेरसुवर्णकेतकद
लद्रोणीस्तुतिद्रोहिणीलक्ष्मींवीक्ष्यसमुद्यदिंदुवदनांक्षीरांबुधेरुत्थितां॥शंभुस्तंभशताकुलश्शतमखः कर्तव्यमूढें
द्रियस्सोप्यज्ञानभुजंगपाशपतितोजातस्त्रिलोकीपतिः॥ विश्रामधाम॥मोहंलक्षयति॥वैचित्यार्थकमुहधातोःकर्तृव्युत्प
न्नतायांबाधइतिधात्वर्थंविवृण्वन्नाह॥विकलंपरिच्छेदासमंचित्तंयस्यसतथातस्यभावस्तत्त्वमित्यभिप्रेत्याह॥विकसत्स्वर्णवर्ण
केतकद्रोण्यंतर्गतदलकांतिमतींप्रसन्नत्वाद्गौरत्वाच्चतेनातपास्पृश्यत्वमुक्तं॥समुद्यदिंदुवदनांउदयत्पूर्णचंद्राननांउद्गतकांतिलां
क्षीरांबुधेरुत्थितांतेनकदाप्यवीक्षितत्वमुक्तं॥लक्ष्मींवीक्ष्यशंभुःसुखप्रभवःस्तंभशताकुलःसुखकामनासंजातासंख्यस्तंभयुक्तः
शतमखोऽव्यग्रचित्तइंद्रःकर्तव्यमूढेंद्रियाघूर्णितःसोपिसर्वज्ञोपित्रिलोकीपतिर्ब्रह्माऽज्ञानमेवभुजंगपाशोऽनिवार्यत्वात्तत्रपति

अत्र लक्ष्मीविषयकावेगविभावितः स्तंभघूर्णनविस्मरणानुभावितः शंभुशतमखत्रिलोकीपतिगतो मोहस्सर्वेणा विश्रामधामा॥ स्मृतिं लक्षयति॥ उद्बु
द्धेत्यादि॥ प्रत्यभिज्ञामप्यत्रैवांतर्भावयति॥ स्वविषयतत्तावच्छिन्नविषयकसंस्कारसहितस्वविषयेदंतावच्छिन्नलौकिकसंनिकर्षजन्यं तदुभयतादात्म्यज्ञानं प्र
त्यभिज्ञा॥ स्वविषयस्यावच्छिन्नविषयकसंस्कारजन्यं ज्ञानं स्मरणं॥ तथा च संस्कारजन्यत्वस्योभयत्रापि सत्त्वेनेत्यर्थः॥ उद्बोधकमेवास्य विभावोभिमत इत्याह॥ यस्मात्कालिं
दीश्यामलात्संतन्यमानत्वाच्च तत्त्वेनाध्यवसिता रोमालिः सरसो वर्तुलत्वाद्गंभीरत्वाच्च तत्त्वेनाध्यवसिता या नाभिः सकाशात्समेत्य प्रादुर्भूय नभसः क्रोडे तन्नुतरत्वात्त
त्त्वेनाध्यवसितमध्यस्थानतः परिक्रीडते स्फुरति॥ इदं चक्रद्वंद्वं गोलाकारत्वात्तत्त्वेनाध्यवसितं कुचयुगलं सुधानिरतिशयतृप्तिसाधनत्वात्तत्त्वेनाध्यवसि—तो

संस्कारजन्यं ज्ञानं स्मृतिः॥ तच्च प्रत्यभिज्ञारूपं स्मरणरूपं च संस्कारजन्यत्वेनोभयसंग्रहोन्यथा प्रत्यभिज्ञायाः पृथग्भाव
त्वापत्तेः॥ संस्कारोद्बोधकाः सदृशादृष्टचिंताद्या विभावाः॥ अनुभावा भ्रूसमुन्नयनादयः॥ प्रत्यभिज्ञा यथा॥ कालिंदीसरसः
समेत्य नभसः क्रोडे परिक्रीडते चक्रद्वंद्वमिदं सुधाकरकलामाक्रम्य विस्फूर्जति॥ चंद्रोपि स्मरचापचापलचमत्कारं समालं
बते तस्मात्सैव कदंबकुंजकुहरे राधा परिभ्राम्यति॥

धरसः तस्याकरस्तदविनाभावात्तत्त्वेनाध्यवसितस्याधरस्य कलामेक
देशत्वात्तत्त्वेनाध्यवसितमुपरितनभागमाक्रम्य तदेकभावनागोचरीभूय विस्फूर्जति धातूनामनेकार्थत्वाच्चमत्करोतीत्यर्थः॥ सुधाक
रकलाकौटिल्याच्चंद्रकलात्वेनाध्यवसितं नखक्षतं प्राप्य शोभत इति वार्थः॥ चंद्र आल्हादकत्वात्तत्त्वेनाध्यवसितं मुखमपि स्मरचापः का
मनियोज्यतारुण्यसमाकर्षणीयत्वात्तस्य कुटिलत्वाच्च चापत्वेनाध्यवसेया भ्रुकुटी तस्याश्चापलेन क्रियाविशेषेण चमत्कारः शोभातिश
यस्तं समालंबते भजति तस्मात्तया विना संभावितेतावद्वस्तुमेलनात्सैव चिरातीतकालावलोकितैव राधा कदंबनिर्मितकुंजस्य मंड

अत्रचिंतासहकृततादृशसंस्कारसंनिकर्षविभाविनागम्यमुखविकासाद्यनुभाविताप्रत्यभिज्ञाचर्वणाविश्रामधाम॥ वदनेतिराधा
मुखकमलपतद्भ्रमराश्लेषेद्रित्यर्थः॥ अंबुजपदेनवदनाश्लेषिणिचक्षुषिभ्रमरत्वावेदनादतएवकर्णानाकलनान्मध्यवतंसकर्ण
विकीर्षितविन्यासंभूषणमंसमूलेस्कंधाधोवध्नातिसतिदरातिरीषद्वलितलोचनंस्मितेतिहासचित्रितंआननंमुखंस्मरामिस्मृचिंता
यामित्यर्थेकथनाच्चिंतयामीत्यर्थः॥ ननुध्यानंचनस्मरणात्मकमित्युक्तवृताग्रंथकृतास्मरणान्यज्ञानेचिंतेत्युक्तंतथाचप्रतियोगिवि
धयास्मृतिभावावगमएवमप्यायातएवेतिचेन्न॥ तथासतिकिंतुचित्तैकाग्र्यमित्यग्रिमग्रंथानर्थकतापत्तेः॥ तस्माद्विजातीयं
ज्ञानंतत्रपद्यकर्तात्पर्यार्थाविषयइतिनकोपिदोषः॥ एतेनप्रकृतपद्येस्मृतिर्नभावोवाच्यस्यव्यक्त्यनालिंगितत्वात्॥ नाप्यलंकारः॥

स्मृतिर्यथा॥ वदनांबुजलग्नदृङ्निपातेमयिबध्नत्यवतंसमंसमूले॥ दरकुंचितदृष्टिराधिकायाःस्मितकिर्मीरितमा
ननंस्मरामि॥ धृतिःसंतोषः॥ अदुःखबुद्धिर्वा॥ विभावाज्ञानशक्त्यादयोनुभावाअव्यग्रभोगादयः॥ सादृश्यामूलक

त्वात्॥ किंतुविभावमात्रंसतःसुंदरत्वाद्रसेपर्यवस्यतीतिवदंतःसमाहिताः॥ स्मृधातोर्मुख्यार्थपरतायामेवतेषांनिरूपितानांप्र
सरात्॥ ननुतथापीहनिहतार्थत्वदोषोदुरुद्धरएवसंस्कारजन्यज्ञानएवतस्यप्रयोगप्राचुर्यादितिचेत्सत्यं॥ सप्रयोजनलक्षणाति
रिक्तस्थलएवतद्दोषसत्त्वात्॥ अत्रचिंतोद्बुद्धसंस्कारविभाविताऽगम्यभूसमुन्नयनानुभावितास्मृतिश्चर्वणाविश्रामधाम॥ धृतिंलक्ष
यति॥ संतोषइत्यादिपर्यायाः॥ साचलाभादेवनभयशोकाभ्यामितितदुद्भूतधृतिसाधारणंलक्षणांतरमाह॥ अनिष्टाजनकत्वज्ञानंवेत्य
र्थः॥ अनिष्टमिष्टविरोधिद्विष्टमिष्टहानिश्चेतिद्वयमपिभवतीतिनान्यतरासंग्रहः॥ यद्यपिभूषांगरागोभस्मरजांसिसर्वंसुलभा

निनतु बहुवित्तव्ययायाससाध्यमृगमदचंदनादि तथापि मन्मथरिपोः कामारातेर्भोगः सुखानुभवो भ्रश्यति किमुत तथा यद्यपि वे
श्मवसतिस्थानं विपिनं स्वतः सिद्धं न तु कष्टसाध्यसौधतोरणादि तथापि तस्येत्यत्रानुषज्यते ॥ ईशत्वं जगन्नियंतृत्वं हीयते ऊनं भव
ति किमु ॥ तथा यद्यपि वाहनं संचारसाधनं वृद्धो नाकलितजन्मभूमिर्वृषो न तु दीनतूच्चैःश्रवःप्रभृति तथापि जनैरित्यत्रानुषज्यते स
महादेव इति सकलश्रेष्ठ इति वा केन न नो गीयते न व्यवह्रीयते किमु ॥ तथा यद्यपि चेलं चीनांशुककार्यं प्रावरणकारि चर्म गजकृत्तिर्न तु
नर्घ्यशाट्यादि तथापि तस्य च दूरगतालंकारस्यापि देवदेव इति वा संज्ञा साम्राज्यलक्ष्मीसंपन्नैक निरूढमपि नाम जनैस्त्यज्यते स्मिन्नप्र

यथा ॥ भूषा भस्म स्रजोऽसि वेश्म विपिनं वृद्धो वृषो वाहनं चेलं चर्म तथापि मन्मथरिपोर्भोगः किमु भ्रश्यति ॥ ईशत्वं किमु हीय
ते किमु स महादेवेति नो गीयते किं वा तस्य च देवदेव इति वा संज्ञा जनैस्त्यज्यते ॥ स्वकृतक्रियासंकोचो व्रीडा ॥ नवशंकाप्रा
सेषाति व्याप्तिः ॥ तत्र क्रियाविरह एव न तु क्रियासंकोचः ॥ अत्र विभावा दुराचारादयः ॥ अनुभावाः शिरोनमनवदननयन
प्रच्छादनादयः ॥

युज्यते वा किमित्यर्थः ॥ अत्र गम्यविवेकविभाविता चापलोपशमाद्यनुभाविता धृतिस्सर्वेणा विश्रामधाम ॥ व्रीडां ल
क्षयति ॥ संकुच्यतेऽनेनेति करणव्युत्पत्त्या क्रियासंकोचकारणीभूता चित्तवृत्तिरित्यर्थो दांतरत्वमुपपद्यते संकोचश्च स्वसंकल्पप्रवृत्तिसाध्यत्वं
॥ न तु क्रियाविरहप्रयोजकत्वेव किं न कृतमित्याशंकते ॥ अनित्याप्तिं वारयति ॥ यत्तदित्यादिः ॥ स्त्रीणामेव पुरुषावलोकनमात्रात्पुंसामेव
च प्रतिज्ञाभंगमात्राद्व्रीडेति तदुभयसाधारणं व्रीडाविभावं दर्शयति ॥ का विल्कमलनयनाकांतेनायके चेलमंचलं हरति सति हृत्विं तंदि
पमेतेन मृन्याद्दृष्टिरवेदिता लोलंकातरं यथा स्यात्तथा लोकयंतीत स्ततश्च सुःस्विपंती अत एव भित्तौ भित्तौ भूर्षा का च निर्मिता यसंज्ञा ।

र.त. ताभिमुख्यायां च चतुर्दिगवस्थितभित्तावपि प्रतिफलगतं प्रतिबिंबतादात्म्यापन्नं भालसिंदूरबिंदुं सिंदूरांकितं रत्नकं दृष्ट्वा दृष्ट्वा पुनः नौका
४२ पुनरवलोक्य केलिदीपः क्रीडार्थं स्थापितो दीपस्तेन स्त्रीजात्यसाधारणव्रीडाविभावो दर्शितस्तस्य भ्रमेण भ्रमवशेन एतेन स्वयं निर्वा
पितदीपेपि मणिमये रतिमंदिरे स्वतः प्रकाशताद्योतनादुदात्तालंकारो व्यज्यते॥ सहसाच्छादिति गात्रमंगं एकवचनेनावश्यपिधेयप
योधराद्याविष्कृतं पाणिरेव पंकेरुहं प्रसारितांगुलिदलभाक्कांतेन॥ लसद्दसदृशसंलग्नाग्रस्वास्तिकीकृतं यद्बाहुयुगलं तेनेति याव
त्प्रच्छादयति पिधत्त इत्यर्थः॥ केचित्तु हरितमुपरितनकौसुंबवस्त्रशोभातिशयाधायकं हरिद्वर्णमधोंशुकमिति चेलविशेषणं कांते
हरति सति॥ किंवालीभिर्हरिताय स्मात्तस्मात्माहरितालिकेतिवद्धरितं अपहृतं चेलं परिधानीयं लोलं चकितं यथा स्यात्तथालोकयं
यथा ऽयोध्यावर्णने॥ भित्तौ भित्तौ प्रतिफलगतं भालसिंदूरबिंदुं दृष्ट्वा दृष्ट्वा कमलनयना केलिदीपभ्रमेण॥ कांते चेलं ह
रति हरितं लोलमालोकयंती गात्रं प्रच्छादयति सहसा पाणिपंकेरुहेण॥ इतरेतरक्रियाकारणं॥ क्रियायाः शीघ्रता
वा चपलता॥ यत्र विषयानुपादानमेव दृष्टेः सूच्यत्वं गमयति सा पाणिपंकेरुहेण मुकुलितेन पाणिना गात्रं किंचिद्देवांगं प्र
च्छादयतीति हरितपदचेलपदयोरन्यतरस्य स्थानव्यत्ययं कृत्वा क्लिष्टगत्या योजयंति॥ अत्र नायकालोकतदुराचारविभावितांग
प्रच्छादनानुभाविता व्रीडाचर्वणा विश्रामधाम॥ चपलता लक्षयति॥ व्यासज्यवृत्तिधर्मावच्छिन्नक्रियानिष्ठकार्यतानिरूपितकार
णताश्रय इत्यर्थः॥ ननु कारणतावच्छेदकवैजात्यापरिचये दुर्ग्रहमेतल्लक्षणं॥ तत्परिचयनदेव लक्षणमस्त्वित्यभिप्रेत्य तथैवाह॥ शी रामः
घ्रता॥ क्रियाशेषनियामिका विजातीयांतःकरणवृत्तिरित्यर्थः॥ एषैवानालोच्यकारित्वमिति गीयते॥ एतेन प्रकृतोदाहरणे विश ४२

तिर्भवति ज्ञानानामेव यौगपद्यनिषेधात्॥ तथा चानेकक्रियाकारणीभूता चित्तवृत्तिरेका नास्त्येवेति नव्यगौडमतमालंब्य प्रजल्पं
तः समाहिताः॥ तथापि युगपत्तावत्प्रयत्नकारणीभूताया श्चित्तवृत्तेस्तैरप्यभ्युपगमात्॥ अन्यथा प्रयत्नयौगपद्यस्यैवाकस्मिकत्वाप्या
दुर्वारत्वात्॥ अस्माकं तु विजातीय एक एव प्रयत्नस्तावत्क्रियाकारणत्वेनाभिमतः किंवा तत्कारणतावत्प्रयत्नकारणीभूतान्यैवैकस्य
न्यदेतत्॥ तावत्प्रयत्नसमुदाय एव चपलता पदार्थ इति तु युक्तमुत्पश्यामः॥ कारणतास्वरूपलक्षणवाक्येपि इतरदितरदित्तिचेष्टका
रणस्यानेकत्वं स्फुटयितुं बहुषु पुस्तकेषु व्यस्तपाठस्य दर्शनात्॥ अपि च कारणतावच्छेदकस्वरूपलक्षणवाक्येपि क्रियते नेनेति क्रियाप्रयत्न
स्तस्य शीघ्रता यौगपद्यमित्यक्षरानुसारात्॥ इत्थं च व्यासज्यवृत्तिधर्मस्य कार्यतानवच्छेदकत्वेपि न क्षतिरिति मंतव्यं॥ वैरिदर्शनं शत्रुगवेष

मात्सर्यद्वेषरागादयो विभावाः॥ अनुभावा वैरिदर्शनवाक्पारुष्यप्रहारादयः॥ यथा॥ लंकाचारिणि सेतुकारिणि रणक्रीडा
चमत्कारिणि प्रौढानंदवचः प्रसारिणि पुरो रामे धनुर्धन्वति॥ जातास्तस्य दशाननस्य समरप्रारंभदंभस्फुरत्केयूरक्वणितानु
मेयविशिखत्यागाः कराश्रणयः॥

णं॥ लंकाभिमुखगमनशीले सेतुबंधकर्तरि रणे संग्रामे या क्रीडा हेला समाश्रितो व्यापारस्तेन चम
त्कारिण्यद्भुते प्रौढं प्रतिपक्षोहेजनसमर्थं तथा स्वीयोत्साहसमुद्भूतं च यद्वचः सिंहनादस्तदुद्घोषिणि रामे दाशरथौ पुरोग्रे धनुश्चापं धु
न्वति प्रत्यंचाकर्षणेन टणत्कारयति सति तस्य त्रिलोकीजयिनोपि दशाननस्य रावणस्य कराश्रेणयः कराणां विंशतिरपि॥ बहुवचनमेके
कप्रक्षेपसमासक्तान् अभिमुखसव्यापसव्यबाहुद्वयस्य सव्ययोर्वा पर्यधसोरपसव्ययोर्वा पर्यधसोः सव्यापसव्ययोर्वा पर्यधसोश्च स
मुदायान् सव्यसाचिताभिव्यंजकान् बहून् वक्ति॥ यत्तु पंचपंचानामेव समुदायाश्चत्वारो बहुवचनार्थ इति कश्चिदाह॥ तद्भ्रमसाभिधानं

समरेति॥दंभोगर्वस्तेनोनस्फुरणमतःसमरेत्यादिनद्विशेषणं॥तथाचसमरः प्रारभ्यतेयेनताद्दशोदंभोयेनेतिव्युत्पत्त्यादंभःसंग्रामा
त्मकेनफलेनोपहितोयद्दशात्सवेगोत्रदंभोनार्थः॥तेनव्यावल्गातोबाहुभूषणस्यरणितेनानुमेयाएवनतुद्दश्यावेगातिशययाह्वाण
प्रक्षेपाययासातथाभूताजाताइत्यर्थः॥नचात्रवक्ष्यमाणामर्षरूपव्यंग्येनैवोपपत्तौकिंचपलतायाआधिक्येनेतिवाच्यं॥रावणेनाम
र्षस्यचिरंतनतयायुगपत्तावक्रियाणामिदंप्रथमतायाअनुपपत्तेः॥अभिनवोदितकार्यस्यकारणेनाप्यभिनवोदितेनभवितव्यं
नतुचिरंतनेनेतिचपलतायाआधिक्यात्॥नन्वमर्षप्रकर्षएवाभिनवंकारणमस्त्वितिचेदोतावतैवसिद्धेनःसमीहितं॥हर्षमदयो
रिवामर्षचपलतयोःपार्थक्यस्यत्वयाससहस्तितत्वात्॥प्रकर्षस्यताद्दशविजातीयप्रयत्नप्रयत्नकलापान्यतरोपाहितत्वएवपर्य

चेतःप्रसादोहर्षः॥प्रियदर्शनपुत्रजननादयोविभावाः॥अनुभावाःपुलकस्वेदाश्रुस्वरभेदादयः॥यथा॥पुलकितकुच
कुंभपालिराधाव्रजतिमुकुंदमुखेंदुवीक्षणाय॥

वसानात्॥अमर्षत्वावांतरजातौमानाभावादित्यास्तांतावत्॥अत्रधनुर्ध्वनि
समुद्दीपितमात्सर्यविभावितायुगपत्सर्वभुजकरणकप्रहारानुभाविताचपलताचर्वणाविश्रामधाम॥हर्षलक्षयति॥प्रसादःप्रसाद
हेतुःसुखं॥तेनांतरत्वमायाति॥दर्शनंज्ञानमात्रं॥दृष्टेत्यादितिवन्नतुचाक्षुषमेवदृष्टेरिष्टप्रदोराक्षरित्यादिवत्॥तेनवीक्षणायत्र
जतेत्युदाहरणेदर्शनातिरिक्तप्रियश्रवणादेरेवविभावस्यगम्यत्वेपिनक्षतिः॥राधामुकुंदस्यश्रीकृष्णस्यमुखमेवाल्हादकत्वादिंदुस्तेन
राधाचक्षुषोश्चकोरत्वमावेदयतोत्कंठागम्यते॥तस्यवीक्षणायावलोकनार्थं॥पुलकितेति॥संजातपुलकाकुचावेवकुंभौतेनोत्कुंभोत्तुं
गत्वमावेद्यतेतयोःपालिर्मंडलंयत्रकर्मणियथास्यात्तथाव्रजतियातिमध्यस्यतनोरपिभंगाद्व्यथायाभीतिंनविरचयतिकरोतिनिर्बंध

नौका [illegible] रामः

अतएव नितंबपदमजहत्स्वार्थलक्षणया कुचावपि वक्ति॥ गतिविरोधीन्यपीति शेषः॥ नृगणपतिनानुसंधत्त इत्यर्थः॥ अत्र गम्यप्रियसमागमश्रवणविभावितः पुलकोद्गमपुष्पाद्यनुभावितो हर्षश्रवणाविश्रामधाम॥ आवेगं लक्षयति॥ आकस्मिको यदृष्टस्येष्टानिष्टस्य वा निपातः स विवर्तो मुख्यकारणं यस्य नाट्यशोमनोविकार इत्यर्थः॥ जडतायामतिप्रसंगाल्लक्षणांतरमाह॥ संभ्रमपदार्थो वेत्यर्थः॥ दर्शनश्रवणे ज्ञानमात्रे॥ तदुक्तं॥ आवेगो राजविद्रावरस्यादेः संभ्रमो मतः॥ तत्र विस्मरणं स्तंभः स्वेदः कंपः स्खलद्गतिरिति॥ रघुपतेः सेनाचरान् भटानालोक्य दृष्ट्वा वैरिमृगीदृशां कांतरासीणामेकः करो विश्लथेलराधावनगलिते वाससि द्वितीयः स्खलितावलंबनाय सहचरविरचपतिनमध्यभंगभीतिं गणयति नापि नितंबगौरवाणि॥ आकस्मिके शानिष्टनिपात विवर्तः॥ संभ्रमो वावेगः॥ वैरिदर्शनप्रियश्रवणेष्वाताद यो विभावाः॥ अनुभावास्त्वराशरीरस्खलनविपर्यासादयः॥ यथा॥ एको वाससि विश्लथे सहचरी स्कंधे द्वितीयः करः पश्चाद्गच्छति चक्षुरेकमितरद्वर्त्मे मुखं भ्राम्यति॥ एकं कंटकविद्धमस्ति चरणं निर्गंतुमुत्कंठते चान्यद्वैरिमृगीदृशां रघुपतेरालोक्य सेनाचरान्॥ रीस्कंधं व्याप्तस्तयैकं चक्षुः पश्चात्पृष्ठतो गच्छति धाटीपरीक्षायै दूतरश्च मार्गभेदप्रसंगभयाद्द्वितीयं चक्षुरर्थाद्ग्रे गच्छतो मुखे मुखपदेन मुखानवलोकने तु सर्वत्र भटबुद्धिरेव तासामित्यर्थो ध्वन्यते॥ भ्राम्यति॥ एकं चरणं कंटकविद्धमस्ति मार्गानालोचनात्स्वनिर्गंतुं धावितुमुत्कंठते भयातिपातादित्यर्थः॥ अत्र सेनाचरदर्शनविभावितस्त्वरास्खलनानुभावित आवेगश्रवणाविश्रामधाम॥ यथा वा मम॥ पतिमुपयांतमकस्मान्मध्येरथ्यं तया समालोक्य॥ पतत्स्खलितमाशु गत्या न चिरात्कलितं मनोरथैस्तस्य॥ अत्र प्रियदर्शनविभावितः स्खलितानुभावितः स तथेति विवेकः॥ नव्यास्तु॥ आकस्मिकोऽचिंतितबलवच्चरानर्थप्रतिपत्तिसंभूतदृष्टानिष्टनिपातस्तेष्टानिष्टयोर्हेयो

र·त· संभ्रमइतितुसकलव्यवहारविषयत्वप्रदर्शनेनकार्यविशेषपरिचयद्वाराकारणपरिचयोभवतीतिप्रदर्शनाय॥संभ्रमपदार्थत्वस्यप नौका
४४ रंशक्यतावच्छेदकापरिचयादुर्ग्रहतासूचकोत्रवाशब्दः ॥ अतएवनोदाहरणन्यूनतापि ॥ ॥ ॥ अतएवचे
ष्टानिष्टनिपातपदस्याग्रिमेष्टानिष्टदर्शनपदेनतुल्यार्थत्वमपीतिनसंदर्भविरोधइतिप्राहुः॥जडतालक्षयति॥कार्याकार्यविवेकभिन्न
ज्ञानवत्तेत्यर्थः॥यत्किंचिद्विषयकविवेकभिन्नंज्ञानंत्रासभीत्यालस्येष्वतिप्रसक्तमितिविवेकत्वावच्छिन्नसामान्यभिन्नत्वंज्ञानेप्रापयितुं
सकलेति॥विवेकशून्यत्वमेवास्तुकिंज्ञानघटनयेत्याशंकते॥समाधत्ते॥नचस्वप्नेज्ञानमस्त्येवेत्यतिव्याप्तिनादवस्थ्यमितिवाच्यं॥ज्ञानप

सकलव्यवहाराक्षमज्ञानवत्ताजडता॥नचमूर्छापस्मारनिद्रास्वप्नेष्वतिव्याप्तिः॥तत्रज्ञानविरहात्॥इष्टानिष्टदर्शनादयो
विभावाः॥अनुभावाअनवभाषणनिर्निमेषप्रेक्षणेष्टानिष्टपरिच्छेदाः॥यथा॥तुष्यारवारिनिधिपारमुदारवीर्यमागच्छ
तोहनुमतोहसितंवितेनुः॥उद्वीक्ष्यनीरनिधिनीरमधीरवीचिचित्रार्पिताइवपुनःकपयोबभूवुः॥ देनमानससामान्यज्ञानविव

क्षणात्॥मानसत्वंचजातिरितिनज्ञानसामान्यस्यमनोजन्यत्वेनासंभवः॥अत्रकश्चित्पुस्तकेनचालस्यभीतित्रासेष्वतिव्याप्तिः॥तत्र
तत्रकतिपयव्यवहारस्यसत्वादितिसकलपदप्रयोजनंमूलएवसुव्यक्तं॥इष्टज्ञानसहितानिष्टज्ञानमित्यर्थः॥साहित्यंसामानाधिकर
ण्यमभेदोवेतिबोध्यं॥आदिनाचिंतोत्कंठाविरहभयप्रभृतयः॥येकपयोदुरासाधपारस्यपयोधेःपारंतीरंप्रत्युदारंप्रकटीभवद्वीर्यंबलं
यस्मिन्कर्मणियथाभवतितथाऽऽगच्छतोदृश्यमानाद्धनुमतःसकाशाद्धसितंहर्षाद्धितेनुर्विस्तारितवंतस्तएवनीरनिधेःसमुद्रस्यनीरंज रामः
लमधीरवीचीतिनीरस्यविधिविशेषणं॥सुभ्रमुद्वीक्ष्यपुनस्तत्रैवचित्रार्पिताइवनिश्चेष्टतयासंभाव्यमानाबभूवुः ॥ ॥ ॥ ॥ ॥ ४४

अत्रहनुमन्नीरनिधिनीरोभयविलोकनविभाविताविश्लिष्टतानुभाविताजडताचर्वणाविश्रामधाम॥गर्वंलक्षयति॥द्वयोरपिसमानसंवित्त्वे
द्यतयाविनिगमनाविरहेणसत्वमायातितत्तथैवाह॥तथाचसमबलयोर्विरोधात्मकोविकल्पोवाशब्दार्थोन्यथाद्वयोरेकत्रनिवेशान्यतरवे
यर्थ्यापत्तेरितिभावः॥कलशोद्भवेनागस्तिनाजलधौसमुद्रेनिःपीतेऽशेषंचुलकितेसतिगंगयाभागीरथ्यावपुःशरीरंगौरीपतेःपार्वतीजाने
र्ललाटदहनेनिटिललोचनाग्नेर्नाह्नोतुंप्रक्षेप्तुंहेतेतिखेदेयावद्यावत्कालमध्येउपक्रमउद्योगःकृतआरब्धस्तावत्तावत्कालमध्यएवमये
यर्थांतरसंक्रमितवाच्यमनन्यसाधारणप्रभावंवक्ति॥तत्रदेश॥विपक्षेतिशत्रूणांनगरीषु॥एतेनानेकपयोधिपर्याप्तताश्रुणोनिवेदिता॥

आत्मनिसर्वाधिकत्वबुद्धिः॥सर्वस्मिन्नधमत्वबुद्धिर्वागर्वः॥बलैश्वर्याभिजनलावण्यादयोविभावाः॥अनुभावाअवज्ञाभ्रूद
ष्टिचेष्टितहसितपौरुषप्रकाशादयः॥यथापरशुरामवाक्य॥निःपीतेकलशोद्भवेनजलधौगौरीपतेर्गंगयाह्नोतुंदहनवपुर्ललाटद
हनेयावत्कृतःप्रक्रमः॥तावत्तत्रमयाविपक्षनगरीनारीदृगंभोरुहद्वंद्वप्रस्खलदश्रुवारिपटलैःसृष्टाःपयोराशयः॥इष्टसंशयः
॥अनिष्टजिज्ञासावाविषादः॥
यानार्यस्तासांचक्षूंष्येवांभोरुहाण्यंभांसिरोहंतिसमुत्पद्यंतेयेभ्यस्तेषां॥द्वंद्वमितिबहुसंख्याकानांनारी
णामप्यपेक्षयाद्वैगुण्यमावेदयितुं॥ततःप्रस्खलदतिशयेनोद्गच्छद्यदश्रुसंज्ञंवारिजलंतस्यपटलंसमुदायोत्रबहुवचनंसमुदायगतबाहु
ल्यंकथयत्वयोराशिगतबाहुल्यंद्रढयन्ति॥तैःकृत्वापयोराशयाकूपाराःसृष्टाइत्यर्थः॥अत्रगम्येनबलैश्वर्यादिनाविभावितःपौरुषप्रकाशानुभ
वितोगर्वश्चर्वणाविश्रामधाम॥विषादंलक्षयति॥अनिष्टजिज्ञासायामपिविषादव्यवहारादाह॥तथाचेष्टसंशयानिष्टजिज्ञासयोरन्यतरएव
गत्यर्थमत्रवाकारः॥अयमेवव्यवस्थितविकल्पइतिगीयते॥इष्टपदेनेच्छाविषयसामान्यमेवग्राह्यंनतुप्रियजनगांधर्वकाव्यसेवाभिरित्यादावि

वेष्टविशेषएवेत्याह॥

र.त.
४५

प्राग्वदत्रापि प्रकृतिभेदेनानुभावो भिद्यत इत्याह ॥ मध्येवर्त्म मार्गस्य मध्ये कलानिधेश्चन्द्रस्य समुदयो जातः किमातन्यतां कोऽभ्युपायः कर्तव्य इति रुषाभिसारिकोक्तिः ॥ यदि प्रत्यावृत्य भवनं निजं व्रजामि तर्हि वाचां प्रच्यवः प्रतिज्ञाहानिर्भवेद्यदि वा निकुंजमेव गच्छामि तर्हीतः गृहे देवोद्घाटनाय विशिष्यानिर्देशः किं स्यात्कोऽनर्थ आपतेत्को वेद को जानीते न कोऽपि ॥ अहं तु सुतरां न जानेयदि कश्चिद्देवो भयभिन्न एव वनतटे उभयतस्तत्कृतादौदासीन्यमालंब्य तिष्ठाम्येतावता किं जातं न किमपि ॥ इष्टानवाप्तेरनिष्टावाप्तेश्च तादवस्थ्यादिस्यर्थः ॥ अत्राभिसरणरूपापराधविभावितोऽनिष्टनिवारणचिंतानुभावितो विषादश्चर्वणाविश्रामधाम ॥ औत्सुक्यं लक्षयति ॥ प्रियप्राप्तौ विलंबो मास्त्विती(च्छे)त्यर्थः ॥ ननु द्दि

इष्टपदेन जीवनधनयशःशरीरपुत्रकलत्रादयः ॥ विभावा अपराधधनगमनादयः ॥ अनुभावा उत्तमानां सहायान्वेषणोपायचिंतादयः ॥ मध्यमानां विमनस्कता ॥ अधमानामिष्टध्यानधावनमुखशोषनिद्राश्वासादयः ॥ यथा ॥ प्रत्यावृत्य यदि व्रजामि भवनं वाचां भवेत्प्रच्यवो निर्गच्छामि निकुंजमेव यदि वा को वेद किं स्यादितः ॥ तिष्ठाम्येव यदि क्वचिद्द्वनतटे किं जातमेतावता मध्येवर्त्म कलानिधेः समुदयो जातः किमातन्यताम् ॥ औत्सुक्यं कालासहिष्णुता ॥ सकलेन्द्रियाणामेकदैव क्रियाप्रारंभो वा ॥ प्रियस्मरणादयो विभावाः ॥

इष्टकालेनाभिनवसंबंधो विलंबस्तथा च प्रियसमागमेनाभिनवसंबंधी दिष्टः कालो मास्त्विती(च्छा)तदिति फलितं तदपेक्षयेष्टः कालः प्रियसमागमेनापूर्वसंबंधी भवत्विती(च्छे)वौत्सुक्यमस्तु लाघवाद्व्यापकत्वाच्चेत्यत स्तथैवाह ॥ सकलानामिंद्रियाणामेककालीना या क्रिया व्यापारस्तस्य प्रारंभस्समुत्पत्तिर्यस्याः सकाशात्साधुनैवास्य प्राप्तिर्भवत्विती(च्छा)रूपान्तःकरणवृत्तिर्वेत्यर्थः ॥ अस्ति ह्यौत्सुक्याद्व्यापारशैघ्र्यमिति भावः ॥ प्रातर्दूरसमागतनायका या नायिका याः सखीं प्रति सख्या वा तथाविधनायिकां प्रत्युक्तिः ॥

नौका

राम.
४५

हे सुंदरि सखि वासरस्य दिवसस्याद्यः प्रथमो यामः प्रहरः कैरपि स्वमात्रसाक्षात्कृतैः केलिकौतुकेति ॥ क्रीडाचमत्कारगोचरमनोरथै
र्द्वितीयः पुनर्मल्लीकेसरचारुचंपकनवांभोजस्रजां गुंफनैर्ग्रथनैस्तृतीयः कांचीकुंडलहेमहारवलयन्यासैर्नीतोयापितस्ततस्तदनंत
रं संप्रतीति यावच्चरमो यामः कथमिति चिंतां गमयति ॥ केनोपायेन यास्यति गमिष्यति ॥ उत्कंठयाकार्यांतरास्फूर्त्या दिवसदैर्घ्यस्यैव
प्रतिपत्तेः ॥ मल्लीति बहुवचनं पुनः पुनः सातिशयकलानिर्माणाभिप्रायं ॥ कांचीति बहुवचनं त्वरयान्यासात्पुनः पुनः स्रंसनाभिप्रायं
शेषं स्पष्टमेव ॥ अत्र गम्यप्रियसमागमनविभावितं गात्रगौरवचिंतानुभावितमौत्सुक्यं चर्वणाविश्रामधाम ॥ प्रांचस्तु चेतोमीलनं निद्रा

अनुभावास्तत्र गात्रगौरवादयः ॥ यथा ॥ आद्यः कैरपि केलिकौतुकमनोराज्यैर्द्वितीयः पुनर्मल्लीकेसरचारुचंपकनवांभो
जस्रजां गुंफनैः ॥ कांचीकुंडलहेमहारवलयन्यासैस्तृतीयस्ततो नीतः सुंदरि वासरस्य चरमो यामः कथं यास्यति ॥ इतरदिंद्रि
यमपहाय मनस्त्वचि यदा वर्तते तदा निद्रा ॥ मीलनं च ज्ञानजनकव्यापाराराहित्यं पुरीतत्संबंध इति यावत् ॥ सुषुप्तस्वप्नइंद्रियांतर
संबंधविरहकालीनत्वगंतर्गतस्वप्नवहनाडीमनोयोग इति यावदिति वदंति ॥ तेषां मते निखिलेतरबाह्येंद्रियसंबंधविरहकालीनस्वप्न
वहनाडीबाह्यदेशावच्छिन्नत्वङ्मनोयोगस्य विभिन्नव्यभिचारिभावतापत्तिः ॥ निद्रायामिव भावत्वस्य तत्रापि सत्त्वान्मनोधर्मत्वाच्च ॥ तथा
पुरीतत्संबंधस्य स्वप्नपूर्ववृत्तित्वनियमो न घटते सुषुप्तेः प्रागपि स्वप्नसंभवात् ॥ तथा च स्वप्नात्प्राङ् निद्रोद्देशे नियामकालाभश्चेत्यनुशयानो नि
द्रांतर्गत एव स्वप्न एवं च सुषुप्तेः प्रागवश्यं निद्रेति तत एव सुप्तात्प्राङ् निद्रोद्देशश्चेत्याशयेन निद्रां लक्षयति ॥ यदा ॥ तत्कालीना ॥ अंतःकरणरू
त्विरिति शेषः एवमग्रेपि यद्यपींद्रियमपहाय त्वच्येव वक्तुमुचितं तथापि त्वचि स्थितमिति रिक्तं वायवीयमिंद्रियं येन मनः तेते षां त्वच एवेंद्रियत्वम

र.त. लमिंद्रियप्रसिद्धस्तत्कृशब्दो लाक्षणिक इत्यन्ये। तथाच प्रातिस्विकरूपेण प्रहाणलाभात्सर्वमतसाधारण्यमित्याशयः॥ सर्वेंद्रियक्रियासंपा नोका
४६ तलक्षणौत्सुक्यानंतरं सर्वेंद्रियक्रियाशैथिल्यलक्षणं सुप्तमेव गणयितुमुचितमित्याशंकामपाचिकीर्षुराह॥ स्वप्नस्य निद्रांतर्भावं दर्शयति॥
नाडिकायामित्यल्पार्थककप्रत्ययेन तस्याः स्तगात्मता बोध्यते॥ मया मेघखंडः श्रीकृष्णः स्वप्ने दृष्टः कीदृशः तपनदुहितुर्यमुनायाः कच्छं तीरं प्र
तिगच्छन्॥ तथापिच्छगुच्छावतंसः॥ किंचास्मद्वदनं कुंचितेनाक्ष्णा सकृद्वारं वारं पश्यन्॥ अपिच स्निग्धः प्रेमपूर्णोपांगो नेत्रप्रांतो यस्य॥ अ
परं च शिथिलचरणः सालसपदपद्यः॥ अन्यच्च स्तोकविस्पष्टहासः किंचिल्लक्ष्यमुखविकासः॥ इतरच्च कमलकलिकामंडनः कमलकुड्म

सुप्तस्य कारणत्वात्सुप्तात्प्राङ्निद्रा भरतेनोक्ता॥ स्वप्नवहनाडिकायां मनो यदा वर्तते तदा स्वप्नसंभवः॥ तत्र विभावाः स्वभावविं
तालस्यक्रमादयः॥ अनुभावाः पार्श्वकरणनयनभ्रूचालनविभ्रमवचनस्वप्नदर्शनादयः॥ यथा॥ गच्छन्कच्छं तपनदु
हितुः पिच्छगुच्छावतंसः पश्यन्नस्मद्वदनमसकृच्चक्षुषा कुंचितेन॥ स्निग्धापांगः शिथिलचरणः स्तोकविस्पष्टहासः स्वप्ने
दृष्टः कमलकलिकामंडनो मेघखंडः॥ ग्रहाद्यावेशोपस्मारः॥

लभूषण इत्यर्थः॥ अत्र चिंताविभाविता स्वप्नदर्शनानुभाविता बाह्यें श्री
द्रियमीलनरूपा निद्रा चर्वणाविश्रामधाम॥ अत्र कवेरिदमुक्तिसौष्ठवं॥ यत्स्वप्न इति स्थाने निद्र इति पाठे प्राचीनाभिमतसुप्तोदाहरणमेतदे
व॥ अनामंत्रणीयामंत्रणमनुभावो निद्राविभाव इति च विशेष इति॥ अपस्मारं लक्षयति॥ भूतसंचारादिसंभूतो व्याधिविशेष इति भावः॥ सा
मान्यतश्च व्याधिनिर्देशेपि विशेषतया पुनर्निर्देशोर्थविशेषद्योतनाय॥ तथाहि॥ सामान्यतो व्याधिर्बीभत्सभयानकविप्रलंभकरुणेषु भव रामः
ति॥ तत्रायं विशेषः॥ यद्बीभत्सभयानकयोरपस्माराख्यो व्याधिविशेष एव भवति नापरः॥ विप्रलंभकरुणयोस्तु कदाचिदपस्मारः कदाचिद ४६

उद्वेल्लंतो येन वाः पल्लवास्त एवाधररुचो धरोष्ठसदृशा येषां ते॥ अधरपदं वेपमानस्याधरस्यैव संलक्ष्यारुणिम्नः सादृश्यप्रतिपत्तिविक्ला
शकतयोक्तं॥ तथा पर्यस्ताः प्रसारिता याः शाखास्ता एव भुजा येषां ते॥ एवं स्फूर्जंतः प्रकाशमाना ये कोरकास्त एव फेनबिंदवस्तेषां पटलैः
समुदायैर्व्याकीर्णा व्याप्ता देहश्रियो देहकांतयो येषां ते॥ किंच भ्राम्यन्विश्लथो भृंगाणां कलापः समुदाय एव कुंतलः केशपाशस्तज्जुषस्तदू
तः॥ अन्यच्च श्वासभूतेनानिलेनोत्कृष्टकंपभाजो भूरुहाः द्रोणाद्रिप्ररूढा वृक्षाः शैलं द्रोणाद्रिं कृपः रक्षः शक्तिप्रपातमूर्छितलक्ष्मणसंजी
वनौषधिशालिद्रोणाद्रिमानयतो हनुमतः सकाशात्॥ निपातितं किमिदमिति संदिहानेन भरतेन बाणं संधाय पातितमिति शैलस्य विधि

तत्र विभावाः॥ अपावित्र्यशून्यस्थितिधातुवैषम्योत्कटदुःखभयादयः॥ अनुभावाः॥ कंपफेननिःश्वासभूनिपातविपर्यासजि
ह्वालोलनादयः॥ यथा॥ उद्वेल्लन्नवपल्लवाधररुचः पर्यस्तशाखाभुजाः स्फूर्जत्कोरकफेनबिंदुपटलव्याकीर्णदेहश्रियः॥ भ्रा
म्यद्भृंगकलापकुंतलजुषः श्वासानिलोत्कंपिताः शैलं प्रेक्ष्य कपेर्निपातितमपस्मारं दधुर्भूरुहाः॥ मूर्छाप्यत्रैवांतर्भवति॥ तच
मपि विहाय यदा मनः प्रलीनतिवर्तते तदा सुप्तं॥ निद्राविभावः॥ अनुभावा नेत्रमीलनप्रलापश्वासोच्छ्वासादयः॥ विशेषणं॥ प्रेक्ष्य दृ
ष्ट्वापस्मारं उच्चैः प्रपतनं दधुर्धृतवंत इत्यर्थः॥ अत्र महीरुहे समारोप्यमाणदुःखविभावितो वास्तविकभूनिपातानुभावितश्चाहार्यारोपविष
यीभूत एवापस्मारश्चर्वणाविश्रामधाम॥ तस्या अप्यपस्मारविभावानुभावकल्पना पित्वादित्याशयः॥ सुप्तं लक्षयति॥ अपिनास्वप्नवहनाडीसं
बंधेत्वक्परित्यागो नास्तीत्यावेदितं॥ प्रलीनतांति॥ प्रलीनत्वमास्यातनाड्यां॥ कापि बाला मुरारेर्मुकुंदस्य निभृतं निभृतं नन्ज्जागरणशंकया मंदं मं
दं मंतः स्मेरं हासगर्भितं यथा स्यात्तथा कर्णावतंसं कर्णिकारं काचिद्दिग्धा तथैव वाहोः कनकवलयं कंकणं काचिद्दूर्नोदाममालामुत्तानीनि

र.त. अत्रकिंशब्दाइत्तिर्यक्तिभेदप्रतिपादनद्वाराधार्ष्ट्यस्योत्तरोत्तरमतिशयंद्योतयितुं॥तेनानंतसहरणापेक्षयाकटकहरणेधार्ष्ट्यमपेक्षितं नौका
४७ दामहरणेतुतदप्यतिशयितमितिसूचितं॥तेनचत्रिविधायाअपिनायिकायाअनुरागोहरोध्वन्यते॥कीदृशस्यमुकुंदस्येत्याकांक्षायामा
ह॥तपनदुहितुरिति॥यमुनायाःकुंजेलतामंडपरूपेऽधिकरणे॥श्वासेति॥श्वासस्याधिक्येनसातिशयंकंपमानोधरप्रांतोयत्रयथाभव
तितथा॥एवमामीलितेअक्षिणीयत्रयथाभवतितथासुप्यतः॥अत्रत्कारणस्यपषादिसमाप्तिमात्रद्योतकत्वपद्मादिवादेरपिश्वादिवदाकृ
तिगणत्वस्यमृग्यत्वात्स्यादिप्रयोगसाधुत्वायावश्यंवक्तव्यत्वात्साधुत्वमितिकेचित्॥तन्न॥संप्रसारणदोर्लभ्यात्॥कंड्वादेराकृतिगणत्वादिति

यथा॥श्वासोच्छ्वासप्रचलदधरोपांतमामीलिताक्षंक्रीडाकुंजेतपनदुहितुःसुप्यतःश्रीमुरारेः॥अंतःस्मेरंनिभृतनिभृतं
कापिकर्णावतंसंकाचिद्धाहोःकनकवलयंदाममुक्तानिकाचित्॥इंद्रियाणांप्रथमप्रकाशोविबोधः॥निद्राछेदोविभावाः॥
अनुभावाअंगाकृष्टिजृंभाक्षिमर्दनांगुलिमोटनादयः॥ तुवयं॥कुंजइत्यधिकरणसप्तमीनिर्देशादेवशयानस्येत्यर्थोन्नवमनाख्यदो
षाशंकावकाशोपीतिध्येयं॥अत्रशयनविभावितंश्वासाद्यनुभावितंचेतोमीलनरूपंसुप्तंचर्वणाविश्रामधाम॥विबोधंलक्षयति॥प्राथ
म्यविभावदर्शनेनैवदर्शितंभवतीतितमाह॥बाह्येंद्रियमीलनोछेदइत्यर्थः॥अतएवस्वप्नेनातिव्याप्तिः॥येतुचेतोमीलनंनिद्रेत्याचक्षते॥
तन्मतेनिद्रानाशोत्तरंजायमानोबोधोविबोधइतितेषामेवलक्षणंव्याकुर्वत॥पश्चार्वाचीनैर्निद्रेत्यस्यलक्ष्मणोयोगइत्यर्थप्रदर्शनमकारि
॥तदनवधानादेवेतिप्रतीमस्तथाहि॥तथासतिसुषुप्तेरेवलक्ष्मणोयोगनाशसाध्यत्वसंभवात्तत्रातिव्याप्तिरेवस्यात्॥नचनिद्राछेदइत्यं रामः
तस्यलक्ष्मणोयोगइत्यर्थस्तथाचलक्ष्मणोयोगसहकृतेंद्रियजन्यत्वंपर्यवसितमितिनातिव्याप्तिरपीतिवाच्यं॥तथासतितथाभूतमनोज ४७

राधायादृशाकृत्वादेवस्यक्रीडाविदस्यकंसद्विषःश्रीकृष्णस्यसहसाबलाल्लोलाश्चंचलाअपांगतरंगानेत्रप्रांतकटाक्षास्तेषांभंगोरचनात
त्रचतुरंकुशलंनेत्राम्बुजं॥अत्राम्बुजपदंसारूप्यमपिकायेस्यकारणेनसमंविदुरितिसमालंकारन्यायेनतरंगानुकूल्याययोक्तं॥नास्मा
न्यावृत्तस्त्वित्यर्थः॥कथंभूतयादृशानभःक्रीडामंडपांतरालंकुवलयस्यतत्त्वेनाध्यवसितंनेत्रस्यद्रोणीसमुकुलीभावस्तयादरिद्रंरहितं
कुर्वत्यातिर्यग्विकसंत्येतियावत्॥इत्थंचशंकितयानयादृष्ट्यासांकेतिकशब्दासाधारणहेतुःशंक्यान्यज्यतेअत्रनभोदरिद्रपदयोःस
मभिव्याहारेणराधाकृष्णयोर्द्वयोरपिनेत्राणिमुकुलीभूतानिनसंतीत्यर्थमावेदयतातयोःपरस्परकटाक्षाअभूवन्नित्यर्थोध्वन्यते॥कु

यथा॥राधायाःसहसादृशाकुवलयद्रोणीदरिद्रंनभःकुर्वत्याकलकंठकंठनिनदैःसांकेतिकैर्जाग्रतः॥अंगाकृष्टिविवर्त
मानवपुषोदेवस्यकंसद्विषोलोलापांगतरंगभंगचतुरंनेत्राम्बुजंपातुनः॥पराहंकारप्रशमात्मकटसमीहामर्षः॥विभावाअव
मानाधिक्षेपादयः॥अनुभावाःस्वेदशिरःकंपनयनारुण्यादयः॥

र्वत्याइतिसविसर्गपाठेतुराधाविशेषणमेवतत्॥दृशेतितुक
रोतिक्रियांप्रत्येवकरणेतृतीयेतिबोध्यं॥कीदृशस्यकंसद्विषः॥सांकेतिकैःसंकेतकृतैरतएवकलकंठस्यकोकिलस्यकंठनिनदैरव्यक्त
ध्वनिभिस्तत्त्वेनाध्यवसितैराधाहुंकारादिभिरितियावत्॥जागृतोविच्छिन्ननिद्रस्यपुनःकीदृशस्यांगाकृष्ट्याविवर्तमानंप्रत्यंचद्वपुःशरी
रंयस्यतादृशस्येत्यर्थः॥अत्रनिद्राच्छेदविभावितोंगाकृष्ट्यनुभावितोविबोधश्चर्वणाविश्रामधाम॥अमर्षलक्षयति॥परकीयाहंकारस्यप्र
शमनेयोत्कटाविजातीयासमीहेच्छासेत्यर्थः॥भर्तूरामचंद्रस्याज्ञाप्रवर्तनेनानेवनास्त्येव॥तदुक्तं॥वीरमारुतेइत्यामंत्र्य॥मुद्रांसमुद्रमुल्लंघ्यशीघ्र
माप्यास्यजानकीं॥विन्यस्यपुरतस्तस्याआगच्छमयिजीवति॥इत्येनानन्यात्रस्यरामचंद्राज्ञाविषयत्वात्॥श्लोकार्थस्तुशीघ्रंसमुद्रमुल्लंघ्यसम

र॰न॰ नंतरमेवमुद्रां तस्याः पुरतो विन्यस्यान्यथा रसो मा या भांत्याः विश्वसनीयत्वाप्रसक्तेः तत पश्चान्नानाशंकाकुलां जानकीं समाश्वास्य तस्याः सम्य नोका
४८ क्समाधानं कृत्वा मयि जीवति सति शीघ्रमित्यर्थः ॥ त्वया विलंबिते विलंबा महि सो मम पुनर्दर्शनमसंभावितमेवेत्याशयः ॥ आगच्छ
एहीत्यवसेयः ॥ यथेच्छसि तथा मदिष्टं संपादयेत्युक्ते त्वं किं कुर्या इत्याकांक्षायामाह ॥ अद्येति ॥ इदानीमेव सरसिजनयना मंदोदरी गृहमे
धिनः स्त्री प्राधान्याद भ्यर्हितत या प्राड्विदेशः सूनुर्मेघनादादिः सेनाचवाहिनीत्येवं द्वंद्वसमासः ॥ तथाच प्रकृतामर्षपरियोषार्थे जडत्वामा
विष्कर्तुं पुत्रमित्रकलत्रादिभिः सहयुगपदेवासौ हंतव्य इत्यनेन स्त्रीवधानौचित्याप्रतिभात्मको ष्टानिष्टापरिच्छेदरूपस्तदनुभाव आविष्क्रि
यत इति काव्यविदां पंथाः ॥ एतेन धर्मशास्त्रविरोधं परिजिहीर्षुभिः केश्चित्सरसिजनयनासूनुश्च सेना चेति द्वंद्व आश्रितः स प्रत्युक्तः ॥ स

यथा ॥ अद्यात्रानेव भर्तुः सरसिजनयनासूनुसेनासमेतं बध्वा लांगूलमूले दशमुखमभितो भूतले भ्रामयामः ॥ शश्वन्मार्गा
वलोकप्रचलनयनयासीतया साकमेनां लंकामुत्पाट्य किंवा रघुपतिचरणांभोजयोर्योजयामः ॥

रसिजनयनापदानर्थक्या
पातात् ॥ ननु कस्य सूनुरित्याकांक्षानिरासाय तदिति चेत् ॥ मावीरानुसृतरुरुचक्षुर्भव ॥ कस्य सरसिजनयनेत्याकांक्षायास्तावतात्प
नुवृत्तेः ॥ नन्वर्थाद्रावणस्येत्यध्यवसीयतामिति चेत् ॥ सूनावेव तथा न दध्यासे भवदीयाशंकापेति वान वेति निमीलितनयनं विभावय
तु भवान् ॥ अत एव सरसिजनयनायाः सूनोः सेनेति तत्पुरुषद्वयमपि व्याख्यातं ॥ तत्पदद्वयस्यापानर्थक्यापत्तेः ॥ ताभिः समेतं युक्तं दश
मुखं रावणमभितः समंताल्लांगूलमूले पुच्छे बध्वा भूतले भ्रामयामो भ्रामयित्वा पातयामः ॥ श्रीरामनिकटे परावृत्य गमने विलंबमाशंक्या रामः
ह किंवेति ॥ अथवेत्यर्थः ॥ शश्वत् निरंतरं मार्गावलोको मार्गप्रतीक्षा तत्राप्रचलनयनेयस्याः स्तया ॥ इयं च स्वभावोक्तिरंतरांतरा बाधबुद्धिपरा ४८

हतामपि श्रीरामस्य वातद्दुर्दंतप्रापकस्य कस्यापि वौत्सुक्यभरसमाहृतां संभावनामलंकरोतीत्यवगंतव्यं॥ सीतया साकं सार्द्धमेनां रक्षो
गणाकीर्णां लंकामुत्साद्योन्मूल्य रघुपतिचरणांभोजयोर्हि वचनेनान्यपरायणता वेद्यते योजयामस्तथा सति शीघ्रं प्रत्यावृत्तेस्तत्रैव च
लंकानिर्दलनस्य सुकरत्वादित्याशयः॥ अत्र प्राक् च सर्वदेवाहोपुरुषिकया वयं न वा कृता एवं न तु केनापि क्रमेणापरिश्रांतास्मद्रत्यमु
मर्थं कथंचित्कृत्स्नानुष्ठितमपि बहुवचनं स्वसमभिव्याहारमात्रेणावगमयति॥ अत्र रक्षःकृताधिक्षेपादिनागम्येन विभावितः परुषो
क्त्यानुभावितोऽमर्षश्चर्वणाविश्रामधाम॥ अवहित्थं लक्षयति॥ आकारो निर्वेदाद्यनुभावो मुखप्रसादादिः॥ व्यवहारस्तथाभूत एव प्रियो

आकारव्यवहारसंगोपनमवहित्थं॥ विभावा व्रीडाधार्ष्ट्यकौटिल्यगौरवादयः॥ अनुभावा अन्यथाकरणान्यथाप्रेक्षणान्यथा
कथनादयः॥ यथा॥ त्यक्त्वा सद्म विभीषणः समगतवान्बद्धः सपाथोनिधिः किं विक्रुध्यति सापि सारणिरतः सीता परित्यज्यतां
॥ इत्याकर्ण्य सुहृद्गणस्य वचनं स्मेराननो रावणो मुक्तादाम करेण कंठसविधे कीरस्य विन्यस्यति॥ उग्रता निर्दयता॥ क्त्यादिः॥ तयोः

संगोपनं गुप्त्यनुकूलांतःकरणवृत्तिरित्यर्थः॥ सबंधुरपि बिभीषणः सद्म गृहं त्यक्त्वा गतवान्सोऽशक्यबंधनोऽपि पाथोनिधिः समुद्रो बद्धः कृत
सेतुः सोऽपि परमाप्तोऽपि सारणिः किं विक्रुध्यति परकलत्रापहरणं न मृष्यति अतः कारणात्सीता परित्यज्यतामिति एवंरूपं सुहृद्गणस्य वचन
माकर्ण्य स्मेराननोऽवहेलितसुहृद्गणवचनो रावणः सुहृद्गणकोपपरिजिहीर्षया हासस्यान्यसंभूतत्वमवगमयितुं मुक्तादाम मौक्तिकमालां
करेण तामरसाताम्रेण कीरस्य कंठसविधे शुकमुखाभिमुखं विन्यस्यतीदमसौ दाडिमीबीजबुद्ध्या गृह्णाति किंचिदिति परीक्षितुं करतले नोपन
यतीत्यर्थः॥ अत्र गम्यधार्ष्ट्य विभावितमन्यथाकरणानुभावितं गर्वाद्यनुभावभूतस्याकारस्य मुखविकासादेः संगोपनफलकमवहित्थं चर्वणाविश्राम
धाम॥ उग्रतां लक्षयति॥

प्रचंडक्रियाकारिणीभूताकिमस्यकरोमीत्याकारिकेकेत्यर्थः॥स्वीयदोषकीर्तनस्वीयधनाद्यपहरणादस्यइत्यर्थः॥प्रचंडेर्दंडैःरणेति॥ संग्रामेखंडितायेराजानस्तेषांयाभुजास्ताभिरेवदंडैर्दैर्घ्यात्कोदंडधनुःकृतंरचितंतत्रधनुषिज्यासिंजिनीप्रतिपक्षेतिशत्रुभूतानांराज्ञांयारमण्यस्तासांवेणीलक्षणैस्तंतुभिर्गुंफिताकृता॥ विशिखोबाणएकवचनेनैकस्यापिलक्ष्यंनलभ्यतेइत्यर्थआवेदितः॥क्रूरःकठोरआकारःस्वरूपंयस्यतादृशस्यकुठारस्यतारमुच्चैर्यत्पतनमाघातानुकूलक्रियामात्रंतेनैवप्रभ्रष्टाःप्रसंचंतोदुष्टाःक्रोधाविष्टायेद्विपाहस्तिनस्तेषांमूर्घ्नितिहिपप्रत्यंचनेदंतयोरेवाघाताद्रुज्यमानानियानिदंततलानितैःकृतोस्तिनतुपूर्वंकदाचित्प्रक्षिप्तोलस्यालाभात्॥

विभावाअपराधदोषकीर्तनचौर्यादयः॥अनुभावास्तर्जनताडनादयः॥यथा॥कोदंडंरणभिन्नभूपतिभुजादंडैःप्रचंडैःकृतंतत्रज्याप्रतिपक्षराजरमणीवेणीगुणैर्गुंफिता॥क्रूराकारकुठारतारपतनप्राभ्रष्टदुष्टद्विपव्रज्यादंततलैःकृतोस्तिविशिखस्तल्लक्ष्यमुद्दीक्ष्यते॥ यथार्थज्ञानंमतिः॥अत्रविभावाःशास्त्रचिंतादयः॥अनुभावाःशिष्योपदेशभ्रूक्षेपकरचालनचातुर्यादयः॥यथा॥लाटीनेत्रपुटीपयोधरघटीक्रीडाकुटीदोस्तटीपाटीरद्रववर्णनेनकविभिर्मूढैर्दिनंनीयते॥ तल्लक्ष्यंतद्योग्यंलक्ष्यमुद्दीक्ष्यतेगवेष्यते॥इतिरामंप्रतिपरशुरामस्योक्तिः॥अत्ररामस्यधनुर्भंगरूपापराधविभावितातर्जनानुभावितोग्रतावर्णाविश्रामधाम॥मतिंलक्षयति॥निर्धारणात्मकमितिशेषः॥मूढैःशास्त्रचिंतारहितैःकविभिःलाटीत्यादि॥लाटदेशोद्भूतनायिकासंबंधिनोलोचनयुगस्यकुचकलशस्यलीलागृहस्यभुजविस्तारस्यचंदनपंकस्यचनिरूपणेनदिनंदिवसोनीयतेतिवाच्यतेतदेकमनसामव्यभिचारिभक्तिभाजांपुंसांसमयोगोविंदेतिजनार्दनेतिजगतीनाथेतिकृष्णेतिचव्याहारैःपरिक्रामति॥अत्रसर्वत्रेतिशब्दःप्रत्येकंप्राधान्यस्यजगती

अत्रशास्त्रविमर्शाविभाविताचातुर्यानुभाविताम तिश्चर्वणाविश्राम धाम॥नयादीनामाधिक्यमाशंक्यपरिहरति॥मत्युदाहरणादि शेषदं
तरस्यनीतिशास्त्रसिद्धार्थज्ञानरूपस्यनयस्यलोकवृत्तानुवर्तनरूपस्यविनयस्यस्वाभिलाषज्ञापनरूपस्यानुनयस्यचोदाहरणानिगता
र्थयन्नुपदेशमुदाहरति॥वसुधनंप्रदेयंखलतोदुष्टादवधेयंसावधानतयास्थेयंमनोहरस्यचरणेनिधेयंस्थापनीयंकृतिभिःस्वार्थपराय
णैर्निजंविधेयंस्वाधिकारिकतयाविधिबोधितक्रियारूपंविधेयमनुष्ठेयंविधेर्दैवस्यविधेयंप्रापणीयंफलंविधिर्ब्रह्मैववेत्तितेनकर्मफलस्य

गोविंदेतिजनार्दनेतिजगतीनाथेतिकृष्णेतिचव्याहारैःसमयस्तदेकमनसांपुंसांपरिक्रामति॥नयविनयानुनयोपदेशो
पालंभा अत्रैवांतर्भवंति॥उपदेशोयथा॥वसुप्रदेयंखलतोवधेयंमनोनिधेयंचरणेहरस्य॥निजंविधेयंकृतिभिर्विधेयंविधे
र्विधेयंविधिरेववेत्ति॥उपालंभोपिद्विविधः॥प्रणयात्माकोपात्माच॥प्रणयात्मायथा॥पाषाणोयदिमार्दवंयदिपयोधाराहृता
शोदरेव्यालीनावदनेसुधायदिरवेर्गर्भेहिमानीयदि॥स्यमाकिंचसमीरणेयदितदास्वप्नेभवेत्त्वत्स्यताकिंनामस्मरभूमिपालभ
गवन्क्रोधान्मुधाधावसि॥
हापरित्यागपूर्वकंविहितकर्मानुष्ठानमुपदिष्टंभवति॥उपालंभंविभजते॥निंदेत्यर्थः॥प्रणयेनात्मास्वरू
पंयस्येतिव्युत्पत्त्याप्रणयपूर्वकइत्यर्थः॥एवमन्यापिअन्यपूर्वकइतिबोध्यं॥काचित्स्वप्रेप्रेयांसमवलोक्यविरहव्याकुलासतीतत्समागमवशान्म
मेयंदुःखस्यतिवक्तुंमनोभुवमुपालभते॥हेस्मरभूमिपालभगवन्क्रोधान्मुधाकिंनामधावसिबहूनुविषयानाक्रामसिननुस्वयंदृष्टपदा
र्थंकिमित्याक्रमनैष्फल्यमतआह॥पाषाणइति॥मार्दवंप्रस्तरेयदिपयोधाराहृताशोदरेयदिसुधाव्यालीनां॥जात्येवस्वभावेनापिक्रौ
र्याधिक्येनसुधायाअत्यंतासंभवायस्त्रीत्वेननिर्देशः॥वदनेयदिहिमानीमहद्धिमंरवेर्गर्भेयदिकिंचसमीरणेवायौस्थैर्यंस्थेयंयदिभवेत्तदास्व

र.त. कोपपूर्वकनिंदायाः पराहंकारप्रशमविषयोत्कटसमीहारूपामर्षसामग्रीत्वेन तद्व्याप्यत्वादिति भावः॥ हे देवदेवाभरण परमेश्वरोत्तंसानेन महाजनपरिगृहीतत्वमुक्तं॥ स्वभावदुष्परिहार्यत्वमाशंक्याह॥ शुधांशविति॥ नाम्नाविरुद्ध एवार्थः प्रतिपाद्यते॥ यथा॥ लोहितो यस्तु नोका
५० वर्णेन मुखपुंडे च पांडरः॥ श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते इत्यनेन लोहितो नीलसंज्ञ इत्याशंक्य नेत्याह॥ जगदिति॥ सुधेति॥
अमृताभिषेकशीतलमेव तेनाऽयोगव्यवच्छेदो बोध्यते॥ जनयसि करोषि तथापि हि स्वरूपत्वेपि मे उरसि तापं वहसि प्रापयसि तहे रा
देवत्वमेवं कुरुषे परं तु यदुपतिवक्त्रसखा वक्त्रसखाय स्यं तथासीति हे तोरहं किं ब्रवीम्यनौचित्यान्न किं चिद्वणामीति चंद्रोपालंभो यदु

कोपात्मामर्ष एवांतर्भवति॥ यथा॥ जनयसि जगदेव देवदेवाभरण सुधारस शीतलं सुधांशो॥ उरसि वहसि मे तथापि तापं
यदुपतिवक्त्रसखासि किं ब्रवीमि॥ ज्वरादिविकारो व्याधिः॥ कुपितधातुकामक्लेशादयो विभावाः॥ अनुभावा दशोपद्रवाः॥
यथा॥ दातुं स्वीयमनर्घ्यदीधितिपदं तस्याः कुरंगीदृशः केयूरं कनकांगुलीयकमिवाने तुं बहिर्गच्छति॥ पत्युपालंभे पर्यवस्यति

व्याधिं लक्षयति॥ ज्वरादेः संभूतो मानसो विकार इत्यर्थः॥ अयमेव ग्लानिनिदानतया प्रागुक्तः॥ ज्वरनिदानमेवात्र विभाव इति प्रतिपा
दयन्नादिपदग्राह्यं दर्शयति॥ कामक्लेशादय इति॥ विरहादय इत्यर्थः॥ तदुक्तं॥ एकैकशो द्वंद्वशो वा त्रयाणां वा प्रकोपतः॥ वातपित्तकफ
नां स्युर्व्याधयो ये ज्वरादयः॥ इह तत्प्रभवो भावो व्याधिरित्यभिधीयत इति॥ अभिलाषः स्मृतिश्चिंता निधनं गुणकीर्तनं॥ व्याधिः प्रलाप उन्मा
दो जडता हे गद इत्यमी इत्युक्तदशावस्थाः॥ अत्र व्याधिशब्देन शारीरं संतापकार्श्याद्युच्यते॥ रसमंजर्यां तथैव तल्लक्षणप्रणयनात्॥ विवे राम:
चयिष्यते चेदमुपरिष्टात्॥ तस्याः प्रस्तुतायाः कुरंगीदृशः कातरायाः केयूरं बाहुभूषणं कर्तृ स्वीयमनर्घ्यदीधिति अत्युज्ज्वलं पदं बाहुरूपं ५०

दातुं वितरीतुं कनकांगुलीयकं स्वर्णोर्मिकामानेतुमाकारयितुमिव बहिः स्वस्थानमतिक्रम्य गच्छति हे कृष्ण तेनोवक्ष्यमाणादन्यदधिकं किं
निवेदयामि तस्या वेणीमिषात्केशपाशजूटीव्याजात्कालियो लोचनवारि बहुलीभूतं कज्जलाहितकालिमं च दृष्ट्वा कालियसरोभ्रांत्या
यामुनह्रदबुध्या ॥ यद्यपि स्मरद्रूत्येवं वक्तुमुचितं तथापि कालियसरःपदस्य तत्र प्रसिद्धिविशेषमादृत्य तथोक्तं ॥ परिभ्राम्यति परि
तो वर्तते केशसंनहनाभावादासमंततो वेणीवल्गनादिति भावः ॥ अत्र विरहविभावितो ऽश्रुपातानुभावितो व्याधिः स्वर्वेणा विश्रामधाम ॥ उन्मा
दं लक्षयति ॥ सुखानुद्देश्यकाचरणफलको मनोविकार इत्यर्थः ॥ तत्र सुखानुद्देश्यकत्वरूपाचरणविशेषणप्रयोजनं वक्तुमाशंकते ॥ नन्व

अन्यत्कृष्ण निवेदयामि किमितो वेणीमिषात्कालियो दृष्ट्वा लोचनवारि कालियसरोभ्रांत्या परिभ्राम्यति ॥ विना विचारमाचार उ
न्मादः ॥ न चागम्यागमने तिव्याप्तिः ॥ विना विचारमिति पदेन व्यावर्तनात् ॥ तत्र सुखमुद्देश्यं तदंशे विचार एव ॥ क्रिया न समीची
नेत्यन्यदेतत् ॥ अप्रेक्ष्यकारितोन्माद इति यस्य मतं तत्रेदं दूषणं ॥ तत्र विभावाः प्रियवियोगविभवभ्रंशादयः ॥ अनुभावा वृथाल
पितवृथारोदनादयः ॥ गम्यागमनस्य सफलत्वे सति न कुर्यान्निष्फलं कर्मेति निषेधविध्यविषयत्वेन तत्कर्तुर्विगानं न स्यादत आह ॥ न
बलवदनिष्टाननुबंधिनीत्येवंरूपमेतद्धि गाननिमित्तमन्यदफलत्वात्स्थगेव तथा च सामान्यनिषेधविषयत्वेपि विशेषतः परदाराभिमर्शन
निषेधादेव तस्य विगानमिति भावः ॥ बलवदनिष्टसाधनताबुद्धितिरोधानफलिकांतःकरणवृत्तिरुन्माद इति मतमुक्तदोषेण दूषयति ॥ ए
षा परिदृश्यमाना काश्युद्रुटदीप्तिमती कांचनलता स्वर्णवल्ली चकास्ति प्रकाशते इत्थं न विविंत्य न ज्ञात्वेत्यनुषक्तान्वयः ॥ किंतु सा परमप्रेमा
स्पदीभूता मे मम राधिके वेत्थं ज्ञात्वेत्यत्राप्यनुषंगः ॥ ननु लतात्वरूपविशेषदर्शनाभावेप्यसंलापसंभावितं जाड्यमेव न तथा स्यादतस्तदप्य

पाकरोति ॥ चेदिति ॥

यदिकुतोपिकथंचिदपिदृष्टोक्तानोजल्पतिनोत्तरयतितदेतिनर्हीत्यर्थः॥संमूर्छितामोहितावर्ततेभवतीत्यमेवमादिविचिंत्यनिश्वित्यस
श्रीकृष्णस्तांलतामधीरैरधैर्यसूचकैःप्रगुणैरितियावत्दृशोर्नीरैरश्रुभिर्मुहुर्वारंवारंसिंचतिवातमधिकश्वासंव्यातनुतेप्रकटयतिक
रेणस्वीयेनभुजयोस्तत्वेनाध्यवसितलताप्रांतयोराधायधत्तेतिव्याख्यानमुदक्षरत्वादुपेक्ष्यं॥करेणास्याप्यभुजयोर्निक्षिप्येतितुकरेणेत्येक
वचनाननुगुणं॥करेणपरस्परावष्टंभवशंवदाभेदाध्यवसायगोचरीभूतेनकरयुगलेनेतियावत्॥भुजयोरंतरालेआधायनिरुध्येतिपुनर्मी
दृशाःवस्तुतस्तुकरेणेतिवातवितननानुगुणमेवेतिऋजुःपंथाःसंभाषतेप्रलपतीत्यर्थइतिदूतीवाक्यं ॥ अत्रनचकास्तीतिवाक्येन
विशेषदर्शनाभावउक्तःसैवास्तिमेराधिकेत्यंविचिंत्यस्येवावतानुराधात्वप्रकारकज्ञानमात्रमुक्तंनपुनरन्यथाभानत्वेनेतिनवमनाख्योदोषउ

यथा॥नैषाकापिचकास्तिकांचनलतासैवास्तिमेराधिकादृष्टाचेन्नकुतोपिजल्पतितदासंमूर्छितावर्तते॥इत्थंहंतविचिंत्य
सिंचतिमुहुर्नीरैरधीरैर्दृशोर्वातंव्यातनुतेकरेणभुजयोराधायसंभाषते॥प्राणनिष्क्रमणंमरणं॥ द्भावनीयः॥नन्वेतद्वाक्यद्वयस

मभिव्याहाराद्भतायामेवराधाभानंपर्यवस्यतीतिचेच्छृणुप्रमुदाहरणताप्रतिपत्त्यर्थमित्यमाहत्याभिहितवत्तस्तादृष्टमेवनतावमनाख्योदोषो
वतरति॥तस्तुनरेनांकविकुलकर्णाभिसारिणींवाणींतावद्दृततरसंघट्टितोष्ठपुटकपाटनिविडितरदयुगलार्गलमवरुंत्स्व॥यदितुलतांराधां
विचिंत्येतिसमदर्थेपिध्यतर्हीसावपिप्राप्स्यदिति॥अत्रप्रियावियोगविभावितोवृथारोदनाद्यनुभावितउन्मादश्चर्वणाविश्रांतिधाम॥मर
णंलक्षयति॥प्राणनिष्क्रमणसमानकालिकांतःकरणवृत्तिरित्यर्थः॥नचप्राणनिष्क्रमणकालेशरीरप्राणसंयोगस्याभावेनकथंतदांतःकरण
वृत्तिसंभवइतिवाच्यं॥क्वचिदेवकारणस्यकार्यसहभावेनहेतुत्वंयत्रकार्यसहभावेनान्वयव्यतिरेकौयथागौमणयभावस्यनतुसर्वत्रैवतथा

इत्थमेवचसिद्धभावस्याप्यनुमितौनकार्यसहभावेनहेतुत्वमितितार्किकशिरोमणिभिरप्यभ्यधायि॥अन्यथासर्वेषामेवकारणानांकार्यसह
भावेनहेतुत्वाभ्युपगमेजितंप्राभाकरैः॥सर्वत्रविनश्यदवस्थतादृशायांकारणत्वसामान्याभावस्यतेषामभिमतस्यतवाप्यभ्युपगमात्॥नन्वा
स्तुतत्तएवास्वरसाचारणप्राक्कालीनांमूर्छांमरणपदार्थतयावर्णयंति॥तन्मंद॥कंपफेनाद्यनुभावसाम्यादपस्मारेणगतार्थतापत्तेः॥योगनेत्र
च्छायाद्याविरस्यर्थः॥परितोस्तोक्षिप्तौचरणौयत्रकर्मणियथाभवतितथाकिंचविकीर्णाइतस्ततःपतिताबाहवोयत्रयथाभवतितथासंग्रा
मभूमौपततोलंकेशस्यरावणस्यकेशपाशंस्वइष्टमनिलोवायुर्भियाभयेननसमाक्रांस्तति॥नक्वालंकृतिउस्रकरोभानुर्वोस्रकरंकिरणंवक्त्रा

विभावानुभावौस्पष्टौ ॥यथा॥पर्यस्ताघ्रिविकीर्णबाहुपततःसंग्रामभूमौभियालंकेशस्यनकेशपाशमनिलःस्वइष्टंसमा
क्रांसति॥उस्रनोस्रकरःकरंकिरतिवावक्त्रारविंदेनवास्वेस्वेधाम्निमिथःकथामपिसुराःप्रव्यक्तमातन्वते॥मनोविक्षोभ
स्त्रासः॥तथाचविचारोस्यामनोविक्षोभोभीतिराकस्मिकमनोविक्षोभस्त्रासइतिविक्षोभेणैवहृषोभेकत्वेनपरिग्रहः॥ रविंदेमुख

पद्मे॥अत्रारविंदपदेनकरकिरणयोग्यत्वमावेदितं॥नकिरतिनप्रसारयति॥नवासुरादेवाःस्वेस्वेधाम्निप्रत्येकंनिजालयेएतेनबहुभिःसंभूयक
थादूरापास्तेतिसूचितं॥मिथःपरस्परंसमदुःस्वतयावध्यंभाविनीमप्येतेनोदासीनेनैकेनापिकथादुर्घटैवेतिसूचितं॥कथामपितेनान्यथा
व्यापारेस्यंतपराङ्मुखतादर्शिता॥प्रव्यक्तमित्यनेनोच्चैःकथानवसरोदर्शितः॥आतन्वतेईषदपिविस्तारयंतितेनवाक्यार्थसांकेतिकैःपदैरेवव्यव
हरंतीतिसूचितं॥अत्रसंग्रामविभावितंभूप्रपतनाद्यनुभावितंमरणंचर्वणाविश्रामधाम॥त्रासंलक्षयति॥मनोविक्षोभोद्विविधः॥उत्कटोनुत्कटश्च
॥तत्रोत्कटोभयमित्युक्तमेव॥अनुत्कटोपिद्विविधः॥प्राक्संभाविनआकस्मिकश्चेति॥तयोरन्यतरपरिग्रहेन्यतराधिक्यंस्यादित्याशंकांपरिहरति॥भो

र.ग. स्यापिविशेषनिरूढभयव्यवहारान्यभीतिव्यवहारविषयत्वप्रदर्शनेनस्थायिभेदोदर्शितः॥विक्षोभयोर्वविक्षोभशब्देनैव॥द्वयोर्विचारोस्था नौका
५२ कस्मिकयोरेकत्वेनैकधर्माक्रांतत्वेनपरिग्रहएकव्यभिचारिभावत्वं॥तथाचोक्तदान्यत्वेसतिविक्षोभशब्दवाच्यत्वंत्रासत्वमितिफलितंबोध्य
।येतुस्थायिव्यभिचारिणोर्भेदमाहु॥तथाचेनोत्साहस्तेषांमतेविक्षोभेणैवस्थाय्यग्रिमग्रंथोविरुध्येत॥नचस्थायिनामपिव्यभिचारित्वस्याग्रेव
क्ष्यमाणत्वादत्रतत्संग्रहोग्रंथकृताप्रदर्शितइतिवाच्यं॥तथाप्यमर्षक्रोधात्तभावस्याकथनान्न्यूनतापादुर्वारत्वात्॥समुद्रोत्तारणसमयेकुत्रा
पिविषयेरामवदनाद्दूतहरीतिनामशृण्वानस्तेनैवेंद्रस्यशंकावहत्वाम्मिशतक्रतुविषयत्वसंदिहानइत्यर्थः॥शतक्रतोःसकाशाच्छंका

तत्रविभावाःघोरस्वनश्रवणघोरसत्वदर्शनादयः॥अनुभावाःस्तंभस्वेदरोमांचाश्रुपातादयः॥यथा॥शृण्वानोहरिनामरामव
दनाद्विंद्रस्यशंकावहंकुर्वन्कातरमांतरंसभगवान्मैनाकभूमीधरः॥कुंचत्पक्षतिभुग्नितश्रुतिकृतप्रत्यंगचोलावृतिस्त्यक्त
व्याहृतिसिंधुपंककुहरेनिर्मंक्तुमाकांक्षति॥विचारोवितर्कः॥

भयंवहन्नितित्वपव्याख्यानंसकाशादित्यध्याहारगौरवापत्तेः॥अन्य
थेंद्रादितिपंचम्यापत्तेः॥किंचैवंवमनाख्यदोषापत्तिरितिस्मर्तव्यं॥आंतरंमनःकातरंचकितंकुर्वन्सभगवानंतर्धानशक्तियुक्तोमैनाकनामाभूमी
धरःकुंचत्पक्षतिवलितपक्षमूलंभुग्नितश्रुतिवक्रितकर्णंतेनैवकृतप्रत्यंगचोलावृतिसंपादितसर्वांगकंचुकावरणंत्यक्तव्याहृतिधृतमौन
व्रतंयथास्यात्तथासिंधुपंककुहरेसमुद्रकर्दमसुलभविवरेनिर्मंक्तुंमंतर्धातुमाकांक्षतीत्यर्थः॥अत्रशत्रुनामाकर्णनविभावितोंगसंकोचा
द्यनुभावितस्त्रासश्चर्वणाविश्रामधाम॥वितर्कंलक्षयति॥अत्रोहोवितर्कइतिप्राचांलक्षणंचिंतायामतिप्रसक्तं॥तस्याअपिकथमिदंघटेतेत्यूहात्म रामः
कत्वादित्याशयेनेत्थमभिहितवताविवक्षितार्थनिश्चयानुकूलइदमित्थंभवितुमर्हतीत्येवमाकारकऊहोविचारपदेनोक्तइतिमंतव्यं॥ ५२

तं विभजते॥ विचारात्मोत्कटकोटिसाधकोपन्यासरूपविचारेणात्मा स्वरूपं यस्येति व्युत्पत्त्या विचारपूर्वक इत्यर्थः॥ इदमेतद्दृशादेवं भवितुमर्हतीत्येवमाकारक इति तु फलितोऽर्थः॥ संशयात्मा संशयेनात्मा यस्येति व्युत्पत्त्या साधारणधर्मदर्शनजन्यसंशयपूर्वक इत्यर्थः॥ इदमित्थमपि भवितुमर्हत्यन्यथापि भवितुमर्हतीत्याकारक इति तु फलितोऽर्थः॥ अनध्यवसायात्माध्यवसायो विपरीतनिश्चयोऽनध्यवसायस्तद्विरोधी विशेषदर्शनमिति यावत् तेनात्मा यस्येति व्युत्पत्त्या विशेषदर्शनपूर्वक इत्यर्थः॥ इदमिदंगुणकं तथा कथं स्यादित्याकारक इति तु फलितोऽर्थः॥ स एवायमुत्कटकोटिकपदेनोक्तोऽग्रे ग्रन्थकृता॥ विप्रतिपत्त्यात्मा विरुद्धस्य कोटिद्वयव्यावृत्तधर्मस्य प्रतिपत्तिर्ज्ञानं तेनात्मा यस्येति व्युत्प

विभावा विप्रतिपत्तिसंशयसाधकबाधकमानसमुद्भावनादयः॥ अनुभावाः शिरःकंपभ्रूचालनादयः॥ वितर्कश्चतुर्विधः॥ विचारात्मा संशयात्मानध्यवसायात्मा विप्रतिपत्त्यात्मा चेति॥ अनध्यवसाय उत्कटकोटिकः संशयः॥ यथा॥ क्वचित्तु स्तकेयथेत्यतः प्राक्प्रत्येकमुदाहरणानीति पाठः पाठोदश्यते सम्यगुरेव॥

त्त्या कोटिद्वयव्यावृत्तधर्मदर्शनजन्यसंशयपूर्वक इत्यर्थः॥ इदमेतद्दृशात्तथापि भवितुं नार्हति तद्दृशादित्थमपि भवितुं नार्हतीत्याकारक इति तु फलितोऽर्थः॥ एतेन विप्रतिपत्तेः शब्दरूपतयाऽनंतःकरणधर्मत्वाच्चतुर्थीविधानगणयितुमुचितेति प्रजल्पन्न प्राकृतः॥ यद्यपि संशयात्मन्येवानेन गतार्थो सो भेदस्तथापि संशयवैचित्र्यसमायातमुद्रहवैचित्र्यमनिवार्यमित्याशयः॥ न चैवं विप्रतिपत्तिजन्यसंशयपूर्वकोहात्मकं भेदांतरमपि दुर्वारमिति वाच्यं॥ उक्तसंशयद्वयानुसृतकोटिद्वयसमर्पकविप्रतिपत्तेर्वैचित्र्याऽनाधायकत्वात्॥ उक्तभेदचतुष्कमनुक्रमेणोदाहरति॥ शंभवं शंभोर्धनुः पर्णीकृतं कार्मुकं कालिदास्यादि॥ यमुनायां वर्तमानस्य कठिनस्य कमठस्येव कठिनं महावीरस्याप्यशक्याकर्षणमिति यावत्॥ रामोऽदाशरथिर्बालस्तनवोदितस्यमृणालस्य बिसस्येव

मृदुलगात्रीयो महावीराशक्याकर्षणधनुराकर्षणेऽस्वराक इति यावत्॥

प्रतिज्ञाभंगसूचिताः कीर्त्यनभिरूपतां दर्शयन्ति॥ वंश इति॥ कुलं भुवः पृथिव्या अवतंसो भूषणमेतावत्कालपर्यंतमकलंकितइति भावः॥
ननु विवाहे प्रतिज्ञाभंगो न दोषायेत्यत आह॥ खला इति॥ दुष्टमतयो व्याहारे दोषोद्भावनविषये प्रखरा निपुणास्तथा च यद्यपि शुद्धं लोकवि
रुद्धं नाचरणीयमिति न्यायादनाचारिता प्रसज्येतैवेति भावः॥ लोकसमक्षं तादृशोप्यनाचारोनुपादेय एव महाजनसेत्याह॥ क्षितिभृतामि
ति॥ राज्ञां गोष्ठीसभा गरिष्ठा महती पुरस्तिष्ठतीत्यनुषंगस्तस्मात्कर्तव्यापरिस्फूर्तेरेषोनुदिनमुपास्यमानो भास्करो जगत्प्रकाशकः केवलमि
त्यवधारणे मम श्रेयस्करः कल्याणप्रसूस्तिष्ठतीति स्वयंवरप्रसंगे राममवलोकयतो जनकस्य सखायं प्रत्युक्तिरियं॥ अत्र रामो धनुर्नमयेन्न

कालिंदी विलुठत्कठोरकमठक्रूरं धनुः शांभवं रामो बालमृणालकोमलवपुर्वंशावतंसो भुवः॥ व्याहारप्रखराः खलाः क्षिति
भृतां गोष्ठी गरिष्ठा यतस्तस्मात्केवलमेष तिष्ठति मम श्रेयस्करो भास्करः॥ यथा वा॥ सौंदर्यस्य मनोभवेन गणनारेखा किमे
षा कृता लावण्यस्य विलोकितुं त्रिजगती मेषा किमुद्भाविका॥ आनंदद्रुममंजरी नयनयोः किं वा समुज्जृंभते राधायाः किमु वा स्वभा
वसुभगा रोमालिरुन्मीलति॥ वेति सख्युर्विप्रतिपत्त्या विभावितो गम्यशिरः कंपाद्यनुभावितो देवतानुगुण्यरूपसाधको पन्यासात्मकवि
चारपूर्वको भास्करसाहाय्याद्रामो धनुर्नमयेदित्याकारकऊहस्सर्वेणा विश्रामधाम॥ मनोभवेन कामेनैषा दृश्यमाना दीर्घा सूक्ष्मा श्यामला च ग
णनारेखा जगत्यैकमेवेदं सौंदर्यमिति सूचिका लिपिः कृता किमिति॥ यद्वा लावण्यस्य कर्तुस्त्रिजगतीं विलोकितुं दर्शनायेति यावत्॥ उद्भाविको
त्कंठता प्रयुक्ताभिव्यक्तिका नाडिः किमिति भावः॥ वेत्यथ वा नयनयो रानंदद्रुमस्य वर्धमानानंदस्य मंजरी पुष्पगुच्छः किं समुज्जृंभते वर्द्धते॥ वा हो
स्विद्राधायाः स्वभावसुभगा निसर्गरमणीया रोमालिः किमु नयनयोरुन्मीलति भासत इति सर्वत्रान्वेति॥ अत्र बहुकोटिसाधारणधर्मदर्शनजन्यसंश

कम्बुभितवक्तुस्तादृशसंशयपूर्वकइयंराधारोमालिरपिभवितुमर्हतिगणनारेखादिरपिभवितुमर्हतीत्याकारकऊहश्चर्वणाविश्रामधाम॥यमुनायाःपाथसि॥तथात्वेनभासमानरोमालिसांतस्यैव।स्वर्णवल्लिस्तत्त्वेनावगताथचखंजनंतत्वेनावभासमानंचक्षुःखेलयंत्युत्तेजयंतीयंकाऽदृष्टपूर्वैवत्वंकथयकथयेत्युपहासेवीक्षातथाशारदेतिप्रसन्नःशीतभानुस्तत्त्वेनावभासमानोयंवायमपिकउदयत्यभिमुखमास्तेवास्तविकश्चंद्रएवायमितिविपर्ययमपाकरोति॥तदुपरीति॥एषःप्रत्यक्षस्तिमिराणांतत्त्वेनावभासमानानांविवर्त्तःपरिणतिभेदोवाकोऽनालोचितपूर्वस्त्वंकथयेत्यनुषंगात्रापिबोध्यः॥अत्रपरथैमत्यादिनागम्येनविभावितःपरानुयोगेनानुभावितःखंजनात्मकविशेषद

यथा वा॥कथयकथयकेयंखंजनंखेलयंतीविहरतियमुनायाःपाथसिस्वर्णवल्लिः॥अयमुदयतिकोवाशारदःशीतभानुस्त
दुपरितिमिराणामेषकोवाविवर्त्तः॥ यथा वा॥इयंनविलसत्सुधाकरकलाधिकाराधिकाकरंकिरणमालिनःकिमुसहेततस्या
वपुः॥

शीनपूर्वकःखंजनाध्यवसितलोचनयुगलेयंनायिकाभवितुमर्हतीतितिमिराध्यवसितधम्मिल्लवदिदंचमुखंभवितुमर्हतीतिवोहश्चर्वणाविश्रामधाम॥विलसंतीविशेषणाक्षीणत्वाल्लसंतीप्रकाशमानोद्भटकांतित्वात्सुधाकरकलेवामृतभरसंभृताधरबिंबात्मकैकदेशएवामृतानुस्यूतषोडशकलामूर्त्तेश्चंद्रादधिकायस्यांतादृशीयंराधिकानतस्यावपुःकिरणमालिनःसूर्यस्यकरंकिरणंसहेत।किंतस्मान्नराधिकानवाकनकमंजरीयतःखंजरीटंवहतितन्नउभयवैलक्षण्यात्स्मरमदालसागात्रगौरवभरिताकेयमुन्मीलतिदृश्यतेतत्कथयेत्यर्थः॥अत्राधिक्यरूपसाधकस्यसूर्यकरसहनरूपबाधकस्यचोपन्यासेनविभावितःपरानुयोगानुभावितोऽसाधारणधर्मदर्शनजन्यसंशयपूर्वकइयंसूर्यकरसहनान्नराधिकाखंजरीटवहनाच्चनकनकमंजर्यपिभवितुमर्हतीत्येवमाकारकऊहश्चर्वणाविश्रामधाम॥

र.त. नचोभयकोटिव्यावृत्तधर्मदर्शने सतिनान्यतरकोटिनिश्चयो भवितुमर्हति॥ तथा विवक्षितार्थनिश्चयानुकूलत्वाभावात्प्रकृतो हेवित नौका
५४ र्कलक्षणमव्याप्तमिति वाच्यं॥ स्मरमदालसेत्यनेन गात्रगौरवादिना कथंचित्सहतद्दृत्यर्थाविष्करणेन तत्कोटिनिश्चयानुगुण्यस्य स्फुटं प्र
तिपत्तेः॥ ननु दशावस्थासु काश्चन शारीराः काश्चन मानस्योऽप्यवस्थाः संति यथा व्याध्युन्मादरूपे शारीरे स्तः॥ न च तथा व्यापार उन्माद इति ल
क्षणे मानसव्यापारविवक्षया तस्याप्यंतरत्वं संभवतीति वाच्यं॥ तथा सति प्रलापपार्थक्यानुपपत्तेः॥ तस्माच्छारीरोन्मापार उन्मादोत एव र
समंजर्यां कापिको वाचिक इति द्विविध एवोन्माद उक्तो नतार्तीयीकोप्यन्यथा विभागन्यूनतापत्तेः॥ प्रलापस्यांतरत्वादेव चन विभागाधि
कं॥ अन्यथा वाचिकव्यवहारस्योन्मादमध्यगणनानौचित्यात्॥ एवं व्याधिरपि शारीर एव तथैव लक्षणकथनात्॥ तत्र व्याधेर्विकार

नवाकनकमंजरीवहति खंजरीटं यतस्ततः स्मरमदालसा कथयपकेयमुन्मीलति॥ ननु दशावस्थास्वभिलाषगुणकथा
प्रलापा व्यभिचारिभावाभ्यंतरे न गणितास्तत्किं स्वतंत्रा एव ते संतीति चेन्न॥ औत्सुक्येऽभिलाषस्य वर्णनात्मकस्मृतौ गुणक
थायाउन्मादे प्रलापस्यांतर्भावात्॥

त्वाद्वैवर्ण्यस्य सात्त्विकभाव एवांतर्भावः॥ नानाविधव्यापारात्मकोन्मादस्य च पुलकाद्यात्मनो यथा
यथं रोमांचादिषु विकारानात्मकस्य तु तस्य न कुत्रापि॥ अन्यास्तु मानस्यः॥ तासां मध्ये चिंतास्मृतिजडताव्यभिचारिषु गणिता अभिलाषगुण ॥श्रीः॥
कीर्तनप्रलापास्तु नेति कुतइत्याशंकते॥ समाधत्ते॥ द्वयोरपीच्छाविशेषात्मकत्वादिति भावः॥ वर्णनात्मकस्मृताविति॥ तथा च तत्त्वकथा विका
र एव न भवतीति गुणकथायास्तद्रूपत्वेन कुत्राप्यंतर्भावस्तज्जनकीभूतस्मृत्यात्मिकाया एव तस्या गुणकथारूपफलवैचित्र्यमंगीकृत्य स्मृत्य रामः
वस्थातः पार्थक्यं तु द्वयोरेव संस्कारजन्यत्वाविशेषाद्व्यभिचारिस्मृतिलक्षणाक्रांतत्वाद्गुणकथायाः स्मृतिव्यभिचारिभावेंतर्भावः संभवत्येवेति ५४

इत्थं च वर्ण्यते गुणवत्तया प्रतिपाद्यते नेनेति वर्णनं तच्च स्मृतिरूपमेव पर्यवस्यतीति बोध्यं॥ उन्मादइति॥ तथा च नदेन लक्षणयोर्ग्रंथकृदु
क्तयोरिवास्य व्यवहारपदे समानार्थके एवं भवतइतिमंतव्यं॥ इदमुपलक्षणं॥ व्याधावुद्वेगो निविशते स्वलक्षणलक्षितस्योद्वेगस्य व्याधिलक्षणा
क्रांतत्वात्॥ तथा निधनं प्राणोत्क्रमणं चेन्न कुत्रापि॥ अविकारत्वात्॥ मरणव्यभिचारिभावलक्षणाक्रांतं चेत्॥ तदेव तदित्यपि बोध्यं॥ इत्थं च
यावत्स्वात्मनि विशते तस्या उदाहरणं तदुदाहरणमेवेति बोध्यं॥ संख्यानियंत्रणममृष्यन्नाह॥ व्यभिचारिपदप्रवृत्तिनिमित्तमनेकरसा
नुगुण्यं दर्शयति॥ एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्तांबूलाहरणछलेन रभसाश्लेषोपि संविघ्नितः॥ आलापोपि न मिश्रितः प
रिजनं व्यापारयंत्या तया कांतं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतइत्यमरुकपद्यं॥ तदर्थस्तु चतुरया तया कयाचिन्नायिकया कांतं प्रति

अत्र प्रतिभाति॥ छलमधिको व्यभिचारिभावइति॥ तांबूलाहरणछलेन रभसाश्लेषोपि संविघ्नितइति शृंगारे दर्शनात्॥ रौद्रे
चेंद्रजालादयः॥ हास्ये च व्यपदेशान्यापदेशयोर्दर्शनात्॥ कोपइर्ष्यामान उपचारतस्तत्तत्कालोचितक्रियया कृतार्थीकृतः स्फु
टोप्यस्फुटत्वं नीतः कोपप्रकाशे हि कोपापनोदनविदग्धेन नायकेन चाटुकारादिभिरेकत्रस्थित्यातदानर्थक्यं स्यादिति भावः॥ एकत्र
देशे आसनसंस्थितिरूपवेशनसत्तादूरतः प्रत्युद्गमादुत्थायाभिमुखगमनात्परिहृतात्यक्तातांबूलाहरणछलेन॥ अत्रच्छलपदं कार्यं गु
णीभूतं न तु मुख्यं तांबूलाहरणसामानाधिकरण्यानुपपत्तेरिति न वमनाख्यदोषः शंकनीयः॥ रभसाश्लेषः प्रेमालिंगनं॥ अपि रभिमुखगम
नेन संभावनां गमयति संविघ्नितः स्वयमेव वृथा विलागतवत्येति भावः॥ एवं परिजनं व्यापारयंत्योपकरणाहरणादौ निरंतरं प्रेरयंत्यालापोपि
प्रश्नोपि॥ अपिः क्रियावेदग्ध्यमाह॥ न मिश्रितः प्रत्युत्तरितइति बोध्यः॥ न चेदं स्वातंत्र्यमित्याह॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥

वीथीभेदे मार्गविशेषे॥ कणादशास्त्रपृथग्भूतेन्यायशास्त्र इति यावत॥ गणनात्क्रमध्ये कुलस्य पृथग्गणनात्॥ तथा च प्राचीननिबंधे
तस्य गणनाप्यस्यैवेति भावः॥ इदमुपलक्षणं॥ यदुक्तं॥ नासौ धर्मो यस्कुलेनानुविद्धस्तपो न कल्को ध्ययनं न कल्कः स्वाभाविको वेदवि
धिर्नकल्कः॥ प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्क इत्यादि॥ तदिदं लक्षयति॥ किंविक्रियागोपनफलकस्य क्रियांतरस्य
कारणीभूतांतःकरणवृत्तिरित्यर्थः॥ अवहित्थं तु निर्वेदाद्यनुभावगोपनफलकं कुलं च तदविरिक्तक्रियागोपनफलकमिति भेदः॥ निकुंज
कुहराल्लतामंडपप्रांते स्थित्वा क्रियमाणा राधामाधवयोरुड्डीविका ग्रीवोन्नमनोस्मान्पातु॥ कथंभूतयोस्तयोः संकेतीकृतकाननं दत्तसंके

वीथीभेदे गणनाच्च॥ संगुप्तक्रियासंपादनं कुलं॥ विभावा अवमाननप्रतिपक्षकुचेष्टादयः॥ अनुभावा वक्रोक्तिनिभृतवीक्षणप्रकृ
तिप्रच्छादनादयः॥ शृंगारे यथा॥ संकेतीकृतकाननं प्रविशतोरन्योन्यकौतूहलादन्यत्वप्रतिभानमारचयतोरन्योन्यमुत्त्रस्यतोः
॥ कुंचत्कायमितस्ततः किसलयैरात्मानमावृण्वतो राधामाधवयोर्निकुंजकुहरादुड्डीविका पातु नः॥ संग्रामे यथा॥ सप्तापि क्लृ
प्तान्कपटांबुराशीन्पुरोपकंठे पुनरीक्षमाणः॥ तं वनं प्रविशतोरेवमन्योन्यकौतूहलात्परस्परविषयककौतुकादन्यत्वप्रतिभानमित
रेतरयोरपियाथ्यातथ्यप्रतिपत्तिर्यथा न भवति॥ तथा व्यवहरतोरत एवान्योन्यमुत्त्रस्यतोरितरेतरज्ञानभीत्यास्थगितयोरेवं कुंचत्कायं पवि
वलितांगयष्टि यथा भवति तथेतस्ततः क्वचित्क्वचिदात्मानं किसलयैः पल्लवैरावृण्वतोराच्छादयतोरित्यर्थः॥ अत्र विश्रब्धव्यवहारपरीक्षा
विभावितं निभृतवीक्षणाद्यनुभावितं कुंजप्रवेशगोपनफलकं कुलं चर्वणाविश्रामधाम॥ कुप्तान्प्रातिभासिकसत्ताभाजः कपटांबुराशी
नैंद्रजालिकसमुद्रान्पुरोपकंठे लंकासमीपे ईक्षमाणः पुनरिति त्वर्थे सोनुभूतहनुमत्पराक्रमो रामचंद्रः कपींद्रस्योदधिक्रमणस्य मुखेद

अन्नांबुराश्यवभासकप्रतिपक्षराक्षसकुचेष्टाविभावितंतथादृक्पातानुभावितंस्वीयतत्त्वावगमगोपनफलकंरामचंद्रनिष्ठकुलंचर्वणावि
श्रामधाम॥ततःसिंहोभवत्सद्योयावत्तस्यांबिकाशिरः॥छिनत्तितावत्सुरूपःखड्गपाणिरदृश्यतेत्यादौरौद्रेपिकुलंदृश्यतेपरंतुविस्त
रभियानोदाह्रियतइत्याह॥यत्तुकथमसौसंख्यानियमः॥मात्सर्योद्वेगदंभेर्ष्याविवेकनिर्णयक्लैब्यक्षमाकुतुकोत्कंठाविनयसंशयधा
र्ष्ट्यादीनामपितुत्रतत्रोदाहरणेषुदृष्टचरत्वादिति॥तन्न॥असूयातोमात्सर्यस्यत्रासादुद्वेगस्यावहित्थाद्दंभस्यामर्षादीर्ष्यायामतेर्वि
वेकनिर्णययोर्दैन्यात्क्लैब्यस्यधृतेःसकाशात्क्षमायाऔत्सुक्यात्कुतुकोत्कंठयोर्लज्जायाविनयस्यवितर्कात्संशयस्यचापलाद्धार्ष्ट्यस्य

दृशोकर्पींद्रस्यमुखेसस्वेदमायोजयामाससरामचंद्रः॥सर्वाणिव्यभिचारिस्थूलानिविस्तरभियानोदाहृतानि॥आलस्यौ
ग्र्यजुगुप्साःसंभोगेवर्ज्याः॥विप्रलंभेआलस्यग्लानिनिर्वेदश्रमशंकानिद्रौत्सुक्यापस्मारसुप्तविबोधोन्मादजाड्यासूयाव्य
भिचारिणः॥हास्येवहित्थालस्यसुप्तनिद्राप्रबोधाव्य०॥ चवस्तुतःसूक्ष्मभेदेपिनांतरीयकतयातदनतिरिक्तत्वस्यैवाध्यवसायान्नु

निवृत्तोगौरवादुच्छृंखलतायाअनौचित्यात्॥अन्यथामतेरीर्षदंतरायालज्जायास्तदंतर्भावस्यात्तदिदंसर्वमभिसंधायैवविनयादीनाम
तावंतर्भावोग्रंथकृतोक्तः॥एषुचव्यभिचारिभावेषुमध्येकेचनकेषांचनविभावाअप्यनुभावाअपिभवंति॥यथेर्ष्यायानिर्वेदंप्रतिविभावत्वम
सूयांप्रतिचानुभावत्वं॥यथावाचिंतायानिद्रांप्रतिविभावत्वमौत्सुक्यंप्रतित्वनुभावत्वमित्याद्यन्यत्रविस्तरः॥अथरसभेदनियतान्व्यभिचारिभा
वान्दर्शयति॥विशेषविधिनिषेधयोःशेषनिषेधाभ्यनुज्ञाफलकत्वन्यायेनविवक्षितार्थप्रतिपादनंतुलाघवमभिसंधायैवेतिभावः॥अत
एवोत्तरत्रसंमुखतयैवतेप्रदर्शिताः॥विप्रलंभव्यभिचारिभावानाह॥एवमग्रेपि॥अन्ये॥हर्षोन्मादस्मृतिमत्यादयः॥रसानुकूलाःशांतरस्य

नुकूलाः॥यद्वाऽन्ये॥अन्येपिकेचन॥

र.त.
५६

रसानुकूलास्तनद्रसानुकूलाः॥स्वयमूह्याः॥उदाहरणानुसारेणद्रष्टव्याः॥तथाचेदंप्रायोवादमात्रमितिभावः॥तदुक्तं॥प्रायोनवस्थि नौका
तेवित्तभावाः संकीर्णसंभवाः॥बाहुल्येननिगद्यंतेतथाप्येतेयथास्थिताः॥१॥शंकासूयाभयंग्लानिर्व्याधिश्चिंतास्मृतिर्मतिः॥औत्सुक्यं
विस्मयोहर्षोव्रीडोन्मादोमदस्तथा॥२॥विषादोजडतानिद्रावहित्थंचापलंधृतिः॥इतिभावाःप्रयोक्तव्याःशृंगारेषुयथायथं॥३॥श्रमश्च
पलतानिद्रास्वप्नोग्लानिस्तथापिच॥शंकासूयावहित्थंचहास्यभावाभवंत्यमी॥४॥दैन्यंचिंतातथाग्लानिर्निर्वेदोजडताधृतिः॥व्या
धिश्चकरुणेवाच्याभावाभावविशारदैः॥५॥ईर्ष्यासूयातथागर्वउत्साहोमदएवच॥चापल्यमुग्रताचैववरौद्रेभावाःप्रकीर्तिताः॥६॥

करुणेमोहनिर्वेददैन्यजाड्यविषादभ्रमापस्मारोन्मादव्यथालस्यस्मृतिवेपथुस्तंभस्वरभेदाश्रूणिव्य०॥रौद्रेउत्साहस्मृति
स्वेदावेगामर्षरोमांचचपलताग्रतास्वरभेदकंपाव्य०॥वीरेउत्साहधृतिमतिगर्वावेगामर्षोग्ररोमांचाव्य०॥भयानकेस्तंभस्वे
दगद्गदतारोमांचवैवर्ण्यशंकामोहावेगदैन्यचापलत्रासापस्मारप्रलयमूर्छाव्य०॥बीभत्सेऽपस्मारमोहावेगवैवर्ण्यानिव्य०
॥अद्भुतेस्तंभस्वेदगद्गदताश्रुरोमांचविभ्रमस्मयाव्य०॥अन्येचभावारसानुकूलाःस्वयमूह्याः॥स्थायिनोपिव्यभिचरंति॥हा
सःशृंगारे॥ उत्साहश्चाप्यमर्षश्चवितर्कोथमतिर्धृतिः॥क्रोधोसूयातथामोहआवेगःशोकहर्षणे॥७॥गर्वोमदस्तथोग्रत्वंभावा
वीरेभवंत्यमी॥संतापोमरणंचैवचापलंचभयानके॥८॥अपस्मारोविषादश्चभयंरोगोमतिर्मदः॥उन्मादश्चेतिविज्ञेयाभावाबीभत्स
संस्थिताः॥९॥आवेगोजडतामोहोहर्षणोविस्मयोधृतिः॥इतिभावान्निबध्नंतिरसेस्मिन्नद्भुतेबुधाइति॥१०॥कश्चित्तुसंभोगवर्ज्यइत्यनेनग्रं
थेनवर्जनीयाएवव्यभिचारिणोग्रेपिदर्शिताइतिबभाम॥तन्मृग्यं॥अथरसविशेषस्यापिविशेषाणामपिव्यभिचारिभावत्वमस्तीतिविवेचयितुं

[illegible]

रामः
५६

४ सूत्रेव्यभिचारिपदस्यानुभावभिन्नव्यभिचारिपरत्वेनौत्सुक्यानुभावभूतचिंतात्मकव्यभिचार्युपादानेरसानभिव्यक्त्यापत्तेः सात्त्विकपदोपादानेतुतदर्थभिन्नेव्यभि
एवमग्रेपि॥ इतिश्रीजड्युपनामकगंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांपंचमस्तरंगः॥ सपरिकरे हेतावभिहितेप्रा
प्तावसरंरसनिरूपणंप्रतिजानीते॥ विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरितिसूत्रस्यविभावानुभावव्यभिचारिणांसंयोगान्मेल
नाद्रसस्यनिष्पत्तिरभिव्यक्तिरित्यर्थकत्वेपिविभावसात्त्विकभावयोर्द्वयोरेवमेलनेपिसर्वाभिमतारसानभिव्यक्तिर्नसिद्ध्यति॥ सात्त्विकभावा
नांहिरूपतयात्रयाणामपिमेलनस्यतत्रसिद्धेरतः सात्त्विकेतिव्यभिचार्यनुभावयोर्गोबलीवर्दन्यायेनग्रहणार्थं॥ अतएवसूत्रेव्यभिचारि

रतिः शांतकरुणहास्येषु॥ भयशोकौकरुणशृंगारयोः॥ क्रोधोवीरे॥ जुगुप्साभयानके॥ उत्साहविस्मयौसर्वरसेषु॥ इतिव्यभि
चारिभावनिरूपणंनामपंचमस्तरंगः॥ अथरसानिरूप्यंते॥ विभावानुभावसात्त्विकभावव्यभिचारिभावैरुपनीयमानः
परिपूर्णः स्थायिभावोरस्यमानोरसः॥ शब्देननिर्वेदादयएवगृह्यंतइतिसंप्रदायइतिस्मर्तव्यं॥ परिपूर्णः॥ आलंबनेरुत्पादि
तउद्दीपनैरुद्दीपितोनुभावैः प्रतीतियोग्यः कृतोव्यभिचारिभिश्चपोषितइत्यर्थः॥ स्थायिभावः॥ रामाद्यनुकार्यनिष्ठएवोपनीयमानोनटेकृ
त्रिमवेषादिनानुकार्यरामादितुल्यतानुसंधानबलादारोप्यमाणइत्यर्थः॥ रस्यमानश्चमत्कारहेतुरिदंचरसपदप्रवृत्तिनिमित्तमुक्तं॥
रसोरसपदार्थोवसेयः॥ तदुक्तमुक्तसूत्रव्याचक्षाणैर्भट्टलोल्लटप्रभृतिभिः॥ आलंबनोद्दीपनेरुत्पाद्योत्पादकभावाद्दीप्योद्दीपकभावाच्चान
भावैर्गम्यगमकभावाद्व्यभिचारिभिश्चपोष्यपोषकभावात्संयोगात्संबंधाद्रसस्यनिष्पत्तिरुत्पत्तिरुद्दीप्तिरनुभूतिःपुष्टिश्चरामादौ॥ नर्तकेतुन
चारिपदंनात्पर्यगम्यतइतिनोक्तदोषः॥ पद्यप्युपात्तेतस्मिन्ननुभावपदस्यापिसात्त्विकभिन्नेतात्पर्यग्राह्यमेवतथापितदसत्वात्पाग्रहोजायमानोपिभ्रमएवकृतइत्यतः पूर्वा
चार्यपरिशोधिततर्कानयावगम्यतइत्याह=४

र.त. यद्वाकृत्रिमैरपितथात्वेनागृहीतैर्विभावादिभिःसर्वैरेवलिंगैरुपनीयमानश्चित्रतुरगन्यायेनरामोऽयमितिबुद्धिविषयेणनटेपक्षेऽनुमीयमानो नौका
५७ ऽतएवपरिपूर्णःस्थायिभावावस्थातोऽवस्थांतरापन्नःस्थायिभावोरत्यादीरस्यमानतयाचर्व्यमाणतयारसपदार्थोबोध्यः॥तदुक्तंश्रीशंकुकैः
॥रामएवायमित्ययोगव्यवच्छेदविषयायाअयमेवरामइत्यन्ययोगव्यवच्छेदविषयायावासम्यग्बुद्धेरनंतरावतीर्णनासौरामइतिबाधा
यारामोऽयमितिमिथ्याबुद्धेर्विरुद्धोभयकोटिकायाअयंरामोनवेतिसंशयबुद्धेरामसादृश्यविषयायारामसदृशोऽयमितिसादृश्यबुद्धेश्चलो
कप्रसिद्धायाःप्रवृत्तिनिवृत्त्ययोग्यतयाविलक्षणयाचित्रतुरगोऽयमितिवद्रामोऽयमितिबुद्ध्यास्कंदितेनटात्मनिपक्षेबाधितमपिविभा
वादित्रयात्मकंलिंगमवगम्यते॥कथंतदवगमइतिचेत्॥नटेनकन्त्रासेयंममांगेषुसुधारसच्छटासुपूरकर्पूरशलाकिकादृशोः॥मनो
रथश्रीर्मनसःशरीरिणीप्राणेश्वरीलोचनगोचरंगतेति॥दैवादहमद्यतयाचपलायितनेत्रयावियुक्तश्च॥अविरलविलोलजलदःका
लःसमुपागतश्चायमितिचालंबनोद्दीपनयोः॥तथाप्रागेवगुरुशिक्षामासाद्यरोमांचाद्याविभावनविषयेकृतेनातिशयितेनाभ्यासेनरोमांचा
द्याविर्भावव्यक्तोत्कंठादेः॥अभ्यासपाटवेनैवचतत्तत्कालोचितकटाक्षभुजाक्षेपादेश्चप्रकाशनसंभवात्॥तेनचरत्याद्यात्मास्थायीतत्रा
नुमीयते॥सेयमनुमितिरेवसचमत्कारप्रतीतिरूपाचर्वणेत्युच्यते॥चर्वणाविषयएवचस्थायीरसपदार्थः॥चर्वणायाश्चसामाजि
कगतत्वात्तेष्वेवरसव्यवहारइति॥इत्थंचविभावानुभावव्यभिचारिभिःसंयोगादनुमानाद्रसस्यस्थायिनोऽनिष्पत्तिरनुमितिरिति
सूत्रार्थः॥वस्तुतःसामाजिकेषुरससंस्पर्शाभावेशतकृत्वस्तस्यसमारोपेऽनुमितौवाचमत्कारोनस्याद्वस्तुसौंदर्यबलादेवप्रकृतविषययो
रनयोश्चमत्कारजनकत्वमितिचलोकप्रसिद्धिमवधूयकल्पनायांनसहृदयसमाश्वासः॥असतश्चान्यगत्वाच्चसामाजिकेषुतादृशस्था रामः
य्यभिव्यक्तिरपिदुर्लभैव॥अन्यथानिर्वासनेषुबालादिष्वपितदभिव्यक्तिप्रसंगादित्यपरितुष्यन्विभावादिभिःसंयोगाद्भोज्यभोजकभावसंब ५७

स्थायीत्यादिः॥एतल्लक्षणे विभावादिसमभिव्याहारेण स्थायिभावोपादानं साधारणीकरणरूपैकप्रयोजनस्फोरणाय विभावानुभा
वव्यभिचारिभावैरिति॥शब्दात्मनः काव्यस्याभिधात्मकप्राथमिकव्यापारेण स्वस्वासाधारणरूपेण निवेदितैर्भावकत्वात्मकद्वैतीयी
कव्यापारेण चागम्यात्वप्रकारकरसविरोधिज्ञानप्रतिबंधद्वाराकांतात्वादिरसानुकूलधर्मपुरस्कारेण परिस्फुरद्भिर्विभावैः संबंधिवि
शेषानवच्छिन्नत्वेन च तथाभूतैः स्थाय्यनुभावादिभिश्चेत्यर्थः॥नचैतादृशव्यापाराभ्युपगमो निरर्थकः स्वात्मनि तत्तन्नायकाद्यभेदबुद्धे
रवागम्यात्वप्रकारकधीप्रतिबंधसंभवादिति वाच्यं॥दुष्यंताद्यात्मकनायके धराधौरेयत्वधीरत्वादेरात्मनि चाधुनिकत्वकापुरुषत्वादे
र्वैधर्म्यस्य स्फुटं प्रतिपत्तेस्तदभेदस्यैव दुरवधारणीयत्वात्॥इत्थं साधारणीकृतेषु दुष्यंतशकुंतलादेशकालवयोवस्थादिषु सत्सु द्वैतीयी

भावविभावानुभावव्यभिचारिभावैर्मनोविश्रामो यत्र क्रियते स वा रसः॥

कव्यापारमहिमा निपंगुतां गते सति समुत्तिष्ठता तार्तीयीकेन भोगकृत्वव्यापारेण रजस्तमसोर्निगीर्णयोः सत्वोद्रिक्तसत्वजनितेन निज
चित्स्वभावनिर्वृतिविश्रांतिलक्षणेन साक्षात्कारेण विषयीकृतो भावनैकगम्यः साधारणीकृत एव रत्यादिः स्थायी भुज्यमानो रसपदार्थः॥किंवा
निजचित्स्वभावनिर्वृतिविश्रांतिलक्षणः स्थायिभावभोगो वा रसः॥तदिदमुक्तं मनोविश्रामो यत्र क्रियते स वा रस इति॥उक्तं च भट्टनायकैः॥र
सो न नाटस्थ्येनेत्यादि॥तस्यार्थः॥न नटादिगतत्वेनारोप्यते न वा रामादिगतत्वेनोत्पाद्यते इति॥नाप्यात्मगतत्वेन व्यज्यते किं त्वभिधाख्यो व्याप
रो यथा वाक्यमात्रस्य तथा काव्यनाट्ययोरेव सत्ताभावकत्वव्यापारेण साधारणीकृतेषु विभावादिषु तार्तीयेन भोगकृत्त्वव्यापारेण भाव्यमानः स्था

१ अस्य त्रिगुणबुद्धिसाध्यनिजचित्स्वभावविश्रांतिलक्षणसाक्षात्कारविषयः स्थायी स्थायिविषयकोक्तसाक्षात्कारो वा तात्पर्यविषयो भवतीति भावः

र.त. ५८

पीसत्वोद्रेकजनितेनस्वप्रकाशानंदमयसंविद्विश्रांतिलक्षणेनपारमार्थिकेनभोगेनविषयीक्रियतइति॥स्थाय्यादीनांसाधारणीकरणफल

कहृदैतीयीकव्यापारमंतरेवाह॥प्रबुद्धोद्बुद्धासमभिव्यक्तेतियावत्॥स्थायिभाववासनासूक्ष्मावस्थापदव्यवहार्योनुद्बुद्धसंस्काररूपानद

वस्थःस्थायीभावइतितुपरमार्थः॥कथंप्रबोधइतितदाह॥प्रथमानुरागेवासनोत्पादकालंबनानुभवापूर्वकास्वादगोचरीभूतेरसे॥यद्य

पीदानींतनसूक्ष्माकालभेदार्जितवासनाभेदेनापिरसास्वादःसूपपदस्तथापिपटुतरभावनाभिप्रायेणेदं॥वस्तुतस्तुस्वाभाविकवासना

मूलान्यकालिकानुभवमूलकस्मृतिप्रभवस्यस्थायिभावस्यवासनायाअभिव्यक्तिस्थलेपिजन्मांतरीणस्यपटुतरवासनाकालीनस्यानुभव

स्यवासनाभिप्रायकोयंग्रंथः॥एतादृशानुभवस्यैवविषयविधयाकारणत्वादालंबनविभावइतिगीयते॥तथाचविभावानुभावव्यभिचा

प्रबुद्धस्थायिभाववासनावारसः॥प्रबोधकाविभावानुभावव्यभिचारिभावाः॥नचयूनोःप्रथमानुरागेव्याप्तिःपूर्वानुभवा

भावादितिवाच्यं॥तत्रापिजन्मांतरीयानुभवसत्वादिति॥

रिभिःसंयोगाद्व्यंग्यव्यंजकभावसंबंधाद्रसस्यभग्नावरणचिद्विशि

ष्टस्थायिनोनिष्पत्तिःस्वरूपेणावभासइतिसूत्रार्थः॥तदुक्तंश्रीमदाचार्यैरभिनवगुप्तपादैः॥लोकेकारणत्वादिनाव्यवहार्यैःप्रमदादि

भिःस्थायिनोरत्यादेरनुमानेऽभ्यासेनयत्साटवंजातदितिप्रवृत्तिरूपंतद्दूतांसामाजिकानांवासनारूपेणांतःस्थितोरत्यादिःस्थायीकाव्येगु

णालंकारादिद्वारानाट्येचचतुर्विधाभिनयद्वारायथोक्तविभावनात्मकव्यापारवत्वादलौकिकविभावादिशब्दव्यपदेशयोग्यदशाविशि

ष्टैस्तैरेवव्यज्यते॥अतएवापटूनांबालानांनरसाभिव्यक्तिः॥किंबहुनापरापिस्वाभाविकीवासनातदभिव्यक्तौहेतुः॥यांविनाशृंगारिणाम

पिमीमांसकवैय्याकरणादीनांनरसा॥यदाहुः॥वासनाचेन्नहेतुःस्यात्तस्यान्मीमांसकादिषिति॥ननुतथाप्यन्यनिष्ठैर्विभावादिभिःकथ

नौका

रामः
५८

ममैवैते शत्रोरेवैते तटस्थस्यैवैते इति संबंधिविशेषस्वीकारनियमस्य न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति संबंधिविशेषपरिहा
रनियमस्य चानध्यवसायात्तेषां साधारण्येन प्रतीतेः॥ तथा चामुकस्यैवेत्यवधारणं विना प्रतीतानां तेषां स्वीयत्वासंसर्गाग्रहः सर्वसंमत
स्य दोषस्य माहात्म्यात्संभवत्येवेति स्वीयस्यापि भाववासनाभिव्यक्तिर्युक्तैवेति भावः॥ नन्वेवं विभावादीनां साधारण्यावश्यकत्वेपि स्थायि
नां साधारण्यं कथं स्यात्तत्तदात्मासाधारणत्वात्तेषां॥ न च मास्तु तेषां साधारण्यं रसाभिव्यक्तेरसाधारण्येप्युपपत्तेरिति वाच्यं॥ तथा सति
सहृदयसंवादो न स्यात्॥ मास्तु संवाद इति चेत्॥ एवंविधालौकिककल्पनायामनाश्वासापत्तेः॥ उच्यते॥ उपायानां विभावादीनामुक्तसाधा
रण्यबलाद्रसानुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृतायायद्विगलनमज्ञानतद्वशादुन्मिषितो वेद्यांत
रसंपर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयसंवादकारिणा प्रमातृविशेषसंबंधाग्रहरूपेण साधारण्येन स्थायी च
र्व्यते॥ ननु चर्वणाविशिष्टस्य स्थायिभावमात्रेण रसः॥ रसं ह्येवायं लब्ध्वानंदी भवतीत्येवमाद्युपश्रुत्या सहृदयप्रमाणेन चानंदस्वरूपताया
स्तत्रादरादिति चेत्॥ स्वप्रकाशनये वृत्तिज्ञानलक्षणस्वाकारवद्वक्ष्यमाणचर्वणास्वरूपाभिन्नस्यात्मानंदस्यापि विषयीकरणात्॥ स च च
र्व्यमाणतैकप्राणश्चर्वणानाशे नश्यन्नत एव विभावादिजीवितावधिरनित्यचर्वणः स्वस्वासाधारणरूपेण विभावानवभासात्पानकरस
न्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वांगीणमिवालिंगन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मास्वादमिवानुभावयन्नत ए
वालौकिकचमत्कारकारी शृंगारादिको रसः॥ स च न विभावादिकार्यः॥ उत्पन्नस्य तस्य तत्काले त्वसंभवत्सामग्रीकस्य तन्नाशकस्य
समवधानपर्यंतं विभावादिचर्वणानाशेपि सत्त्वप्रसंगात्॥ द्वित्वापेक्षाबुद्ध्योरिव कार्यनिमित्तकारणयोर्नाश्यनाशकभावकल्पनाया
गौरवपराहतत्वात्॥ अन्यथैवोपपत्तेः॥ पूर्वं स्वरूपेणासतो ज्ञाप्यत्वस्याप्ययोगान्नासौ ज्ञाप्योपि॥ विभावादिभिरेव समुत्पाद्यज्ञाप्यन

इत्यपि न विचाररमणीयं॥ कार्यवैचित्र्ये सामग्रीवैचित्र्यस्य नियामकत्वात्॥ काव्यार्थस्य विभावस्य स्थायिस्वरूपाजनकत्वाच्च॥ किंच स्व
प्रकाशनयैवास्य ज्ञानस्य वस्तुज्ञाप्यत्वव्यावर्तनाय यत्स्वाभिन्नतज्जन्यज्ञानविषयत्वरूपं तज्ज्ञाप्यत्वमुख्यमिष्टं तत्प्रकृते न संभवत्येव
स्वाभिन्नतज्जन्यज्ञानविषयत्वरूपं तज्ज्ञाप्यत्वं तु न निषेधामः॥ अपि तु विभावादिचर्वणात्मकविभावादिजन्यज्ञानाकारकात्मचैतन्यग्रा
ह्य एवासौ मन्यते॥ तदुक्तं॥ विभावादिभिर्व्यंजितश्चर्वणीय इति॥ कारकज्ञापकाभ्यामन्यो हेतुर्न सिद्ध इति चेत्॥ अलौकिकसिद्धेर्भूषणमेत
न्न तु दूषणं॥ येतु रसे विभावादिकार्यत्वव्यवहारास्तेपि व्यंजकविभावानुभावव्यभिचारिणां चर्वणाया उत्पत्त्या रसस्योपचारात्॥ गुणालंका
राद्यसंभिन्नरसादिविषयत्वलौकिकप्रमितेर्जगद्भेदविषयत्वं जानप्रमितेर्बाह्यार्थसंस्पर्शरहितात्ममात्रविषयत्वं युक्तं प्रमितेश्च गुणालंकारसं
भिन्नरसादिमात्रविषयतया विलक्षणाया संवित्तेर्द्व्यतया ज्ञाप्यत्वव्यवहारः अपि तत्र सांप्रदायिकानां॥ प्रागसत्त्वादिव ग्राहकस्याप्यभा
वान्न मुख्यज्ञाप्यपदप्रवृत्तिनिमित्तवानेषः॥ न चाद्यः॥ यतस्तद्ग्राहकं न निर्विकल्पकं विभावादिपरामर्शस्य निर्विकल्पकजननायोग्यत्वात्॥
नापि स्वभिन्नसविकल्पकं॥ चर्व्यमाणस्यालौकिकानंदमयस्य तस्य स्वसंवेदनमात्रसिद्धत्वात्॥ चर्वणादशायां ज्ञानांतराभावात्॥ स्वाभिन्न
सविकल्पकविषयत्वेन ज्ञाप्यत्वं त्विष्टमेव॥ ननु ज्ञानं तावद्द्विविधं॥ आत्मचैतन्यरूपं निर्विकल्पकमेकं॥ स्वभिन्नसविकल्पकं च द्वितीयं॥
तयोर्मध्ये ज्ञाप्ये ह्येकाविषयत्वेनापरविषयत्वमागच्छत्तद्वयान्यतरविषयत्वाभावेन चोभयविषयत्वमापद्यते तच्च विरुद्धमिति चे
न्न॥ तदिदं स्वाभिन्नसविकल्पकविषयत्वरूपं लोकोत्तरचमत्कारमेव रसचर्वणायामवगमयतीति॥ प्रागुक्तश्रुतिस्वारस्यात्तु स्थाय्य
वच्छिन्नाभग्नावरणाचिदेव रस इति तु युक्तमुत्पश्यामः॥ सूत्रे रसस्येत्यस्य स्थाय्यवच्छिन्नचिदानंदस्येत्यर्थो न्यासेव सरणिः॥ अत्रावरणाभ
ङ्गो वा॥ सहृदयस्य निजसहृदयतावशोन्मिषितेन विभावादिचर्वणामहिम्ना तत्तत्स्थाय्युपहितस्वरूपानंदाकारा समाधिना योगिन इवांतः

करणवृत्तिर्वाचर्वणापदार्थः॥इयंचविभावादिविषयसंवलितचिदानंदालंबनत्वादेवपरब्रह्ममात्रास्वादात्समाधेर्विलक्षणाभाग्यावका
व्यव्यापारमात्रादिति॥नव्यास्तुविभावानुभावव्यभिचारिणांसंयोगाद्भावनात्मनएवदोषाद्रसस्यानिर्वचनीयदुष्यंतादिरत्याद्यात्मनो
निष्पत्तिरितिसूत्रार्थंमत्वाकाव्येनाट्येचकविनानटेनचप्रकाशितेषुविभावादिषुव्यंजनाव्यापारेणदुष्यंतादौशकुंतलादिरतौगृहीता
यांसमनंतरमेवतद्दीयसहृदयतोल्लासितस्यभावनाविशेषरूपस्यदोषस्यमहिम्नाकल्पितदुष्यंतत्वावच्छादितेस्वात्मन्यज्ञानावच्छिन्ने
शुक्तिकाशकलइवरजतखंडःसमुत्पद्यमानोनिर्वचनीयःसाक्षिभास्यःशकुंतलादिविषयकरत्यादिरेवरसः॥ननुभद्रात्मनोदुरधिरो
हतनोर्विशालवंशोन्नतेःकृतशिलीमुखसंग्रहस्य॥यस्यानुपप्लुतगतेःपरवारणस्यदानांबुसेकसुभगःसततंकरोऽभूदित्यादौनानार्थ
स्थलेशक्त्यैवाप्राकरणिकार्थबोधोपपत्तौनातिरिक्तव्यंजनाव्यापाराभ्युपगमःसमुचितः॥शक्तिनियमनपूर्वकंव्यंजनोल्लासमभ्युप
गच्छद्भिरपिनानार्थस्थलेर्थद्वयप्रतीसंगीकारेणप्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरमितिन्यायान्नियमनोल्लासयोरेवाप्रामाणिकत्वा
त्॥अतएवगूढश्लेषेचरमंजायमानस्यबोधस्यप्रथमंवारणापत्तात्पर्यज्ञानहेतुत्वेवाच्येऽश्लीलेऽतात्पर्यविषयार्थबोधेव्यभिचारइति
तस्यैवैयंजनिकत्वमभिप्रेत्यशक्तिजत्वस्यकार्यतावच्छेदककोटिघटनाध्रौव्येवश्यंव्यंजनास्वीकार्यैत्यपास्तं॥अगृहीतगृहीतविस्मृतार्थांतर
शक्तिकस्यपुंसोव्यंजनोल्लासस्याप्यनभ्युपगमात्॥तद्धेतोरेवेतिन्यायाद्व्यंतरकल्पनानवकाशात्॥गूढश्लेषेतुशक्तिग्रहस्यैवविलं
बितत्वादितिचेन्न॥अबलानांश्रियंहृत्वावारिवाहैःसहानिशं॥तिष्ठंतिचपलायत्रसकालःसमुपस्थितइत्यादाववशक्त्यानाद्रव्यमपह
त्यजलवाहकैःपुरुषैःसहपुंश्चल्योरमंतइत्यर्थांतरंनतावदबलावारिवाहचपलाशब्देयोगरूढ्याशाक्यतेबोधयितुंमेघत्वविद्युत्त्वा
द्युघटितस्यैवतस्यार्थस्यप्रतीतेरन्यथाचमत्कारोनस्यात्॥अतएवनयोगशक्त्यापिकेवलयारूढ्यर्थासंवलितार्थबोधकत्वस्यतस्यारू

दिसमानाधिकरणायाअसंगतेः॥

र.त. पुंश्चलीत्वादेःसर्वथैवतदविषयत्वाच्च॥तस्मात्॥योगरूढस्यशब्दस्ययोगेरूढ्यानियंत्रिते॥धियंयोगस्पृशोर्थस्ययासूतेव्यंजनैवसा॥॥ नौका
६० एवंस्थितेनिरुक्तनानार्थस्थलेष्पुपमायाःप्राकरणिकाप्राकरणिकार्थगतायाःप्रतिपत्तयेवश्यंवाच्ययार्थव्यंजनयेवाप्राकरणिकस्याप्य
र्थस्यशब्दव्यंजनयाप्रतिपत्तावलंक्लिष्टकल्पनयेत्याशयेनप्राचीनोक्तंनानार्थव्यंजकत्वंनदुष्यतीत्येवमाद्यन्यत्रविस्तरः॥अयंचकार्योदोष
विशेषस्यनाश्यश्चतन्नाशस्य॥स्वोत्तरभाविनालोकोत्तराल्हादेनभेदाग्रहात्सुखपदव्यपदेश्योभवति॥स्वपूर्वोपस्थितरत्यादिनाचभेदाग्र
हाद्रतित्वेनैकत्वाध्यवसानाद्व्यंग्यश्चर्वणीयश्चोच्यते॥अवच्छादकंदुष्यंतत्वमप्यनिर्वचनीयमेव॥अवच्छादकत्वंचरत्यादिविशिष्टबोधेवि
शेष्यतावच्छेदकत्वं॥एतेनदुष्यंतादिनिष्ठस्यरत्यादेरनास्वाद्यत्वान्नरसत्वं॥स्वनिष्ठस्यतस्यशकुंतलादिभिरतत्संबंधिभिःकथमभिव्यक्तिः
स्वस्मिन्दुष्यंताद्यभेदबुद्धिस्तुबाधबुद्धिपराहतेत्यादिकमपास्तं॥यदपिविभावादीनांसाधारण्यंप्राचीनोक्तं॥तदपिकाव्येनतेषुशकुंतलादि
शब्दैःशकुंतलात्वादिप्रकारकबोधजनकैःप्रतिपाद्यमानेषुसत्सुदोषविशेषकल्पनंविनादुरुपपादमतोवश्यकल्प्यदोषविशेषेतेनैवचस्वा
त्मनिदुष्यंताद्यभेदबुद्धिरपिसूपपदेतिकिंतेन नन्वेवंरतेरस्तुनामदुष्यंतइवसहृदयेपिसुखजनकताकरुणरसादिषुतुस्थायिनःशोका
देर्दुखजनकतयाप्रसिद्धस्यकथमिवसहृदयहृदयाल्हादहेतुत्वं॥प्रत्युतनायकइवसहृदयेपिदुःखजननस्यैवौचित्यात्॥नचसत्यस्यशोका
देर्दुखजनकत्वंक्लृप्तंनकल्पितस्येतिनायकानामेवदुखंनसहृदयस्येतिवाच्यं॥रज्जुसर्पादेर्भयकंपाद्युत्पादकतापत्तेः॥किंचसहृदयेरतेर
पिकल्पितत्वेनसुखजनकतानुपपत्तेरितिचेत्सत्यं॥शृंगारप्रधानकाव्येभ्यइवकरुणप्रधानकाव्येभ्योपियदिकेवलाल्हादएवसहृदय
प्रमाणकस्तदाकार्यानुरोधेनकारणस्यकल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाल्हादप्रयोजकत्वमिवदुःखप्रतिबंधकत्वमपिकल्पनी रामः
यं॥यद्याल्हादइवदुःखमपिप्रमाणसिद्धंतदाप्रतिबंधकत्वंनकल्पनीयंस्वस्वकारणवशाच्चोभयमपिभविष्यति॥अथतत्रकवीनांकर्त्तुंस ६०

अनिष्टसाधनत्वेन निवृत्तेरुचितत्वादिति चेत्॥ दृष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चंदनद्रवलेपनादाविव प्रवृत्तेरुपपत्तेः॥ केवलाल्हा
द्वादिनां तु प्रवृत्तिरप्रत्यूहैव॥ अश्रुपातादयो पि तत्तदानंदानुभवस्वाभाव्यान्न तु दुःखात्॥ अत एव भगवद्भक्तानां भगवद्गुणाकर्णनाद
श्रुपातादयः समुत्पद्यंते॥ न च तत्र जात्वपि दुःखानुभवो स्ति॥ न च करुणरसादौ स्वात्मनि शोकादिमद्दशरथादितादात्म्यारोपे यद्याल्हाद
स्तदा स्वप्रेसंनिपातादौ च स्वात्मनि तदारोपे पि सस्यादानुभाविकं च तत्र केवलं दुःखमिति काव्ये पि केवलं दुःखमेव युक्तमिति वाच्यं॥ अयं हि
लोकोत्तरस्य काव्यव्यापारस्य महिमा यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आल्हादमलौकिकं जनयंति॥ विलक्षणो हि कमनीयका
व्यव्यापारज आस्वादः प्रमाणांतरजादनुभवात्॥ तज्जत्वं च तज्जन्यभावनाजन्यकल्पितरत्यादिविषयत्वं॥ तेन रसास्वादस्य काव्यव्यापार
जन्यत्वे पि न क्षतिः॥ शकुंतलादावगम्यात्वज्ञानोत्पादस्तु स्वात्मनि दुष्यंतायभेदबुद्ध्या प्रतिबध्यत इत्याहुः॥ अनिर्वचनीयरत्यात्मनभ्युप
गच्छतां व्यंजनाव्यापारमप्यविदुषां विदुषां तार्किकाणां मते प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यंतादितादात्म्यावगाही शकुंतलादिविषयकर
त्यादिमदभेदवाचिमानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसपदार्थो भवति॥ तत्र च विभावानुभावव्यभिचारिणां संयोगा
ज्ज्ञानरूपाद्दोषाद्रसस्य ज्ञानविशेषात्मनो निष्पत्तिरुत्पत्तिरिति सूत्रार्थः॥ स च बोधः स्वात्मनि दुष्यंतत्वधर्मितावच्छेदक — शकुंतलादिविष
यकरतिवैशिष्ट्यावगाही शकुंतलादिविषयकरतिमान्दुष्यंत इत्याकारक एकः॥ स्वात्मत्वविशिष्टे शकुंतलाविषयकरतिविशिष्टदुष्यंतता
दात्म्यावगाही शकुंतलाविषयकरतिमद्दुष्यंतो हमित्याकारको द्वितीयः॥ स्वात्मत्वविशिष्टे दुष्यंतत्वशकुंतलाविषयकरत्योर्वैशिष्ट्यावगाह्य
हं दुष्यंतः शकुंतलाविषयकरतिमांश्चेत्याकारकस्तृतीयो पि॥ तत्र च सर्वत्रैव रतेर्विशेषणतया विशेषणज्ञानस्य विशिष्टज्ञाने हेतुत्वात्का
व्यार्थभावनाकाले शब्दादप्रतीयमानाया अपि तस्याश्चेष्टादिलिंगकमनुमानं मध्येभ्युपगंतव्यमिति मंतव्यं॥ स्वाप्नादिबोधे तिप्रसंगवारणाय

र॰त॰ काव्यार्थभावनाजन्मेतिबोधविशेषणं॥ नन्वेवं रसं स्वदत इति प्रयोगानुपपत्तिरास्वादपदार्थस्य बोधस्य रसाभिन्नत्वादिति चेन्न॥ आस्तां नौका
६१ तत्र रतिमात्रपरो रसशब्दः॥ स च रसो न लौकिकबोधात्मा किंत्वनंतःकरणविषयोऽप्यलौकिकसन्निकर्षसंपन्न इति नरत्निमत्तामपेक्षते
॥ विभावादीनां त्रयाणां मेलनात्मकसंयोगाद्रसनिष्पत्तिर्नाम रसपदव्यवहार इति सूत्रार्थं मत्वा तत्त्रयाणां समुदितानां केपि रसत्वमाम
नंति॥ विभावादिषु मध्ये सम्यग्योगाच्चमत्कारात्स इति सूत्रार्थं मत्वा त्रिषु कोपि चमत्कारी चेत्स रसो नान्यथेति बहवः॥ भाव्यमानो विभाव
एव रसस्तथाविधानुभाव एव रसो व्यभिचार्येव वा तादृशो रस इति तु सूत्रे त्रयाणां समुच्चित्य रसनिष्पादकत्वमभिहितवतो भरताचार्यस्या
नभिप्रेतत्वादनादेयं॥ व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणां॥ अश्रुपातादयोनुभावाः शृंगारस्येव करुणभयानकयोः॥ चिंताद

स च रसो द्विविधो लौकिकोऽलौकिकश्चेति॥

योव्यभिचारिणः शृंगारस्येव वीरकरुणभयानकानामिति तेषां प्रत्येकं नियतरसव्यंजनानुपपत्तेश्च॥ एवं स्थिते ह्यसाधारणविभावाद्येकमा
त्रोपादानेपि परयोराक्षेपो ध्रुव इति स्मर्तव्यं॥ तदाल्हादाविनाभूतो बुद्धीभिर्बहुभिर्बहुः॥ प्रोक्तो रसोऽखिलो हृद्यः प्रपंचेस्तीत्यनर्गलं॥ यद्यपि
नाट्येरसस्थितिं निगदता भगवता भरताचार्येण॥ काव्येप्येनां निदर्शयता श्रीरुद्रेण च नाट्यकाव्ययोरसंभवल्लौकिको भेदः समुपेक्षितस्तथा
पि मुख्याभिधेयरसस्वरूपनिरूपणं प्रतिज्ञातवतः स्वस्य तु तादृशभेदोऽनुपेक्षणीय एवेत्याशयेन रसं विभजते॥ प्रबुद्धस्थायिभाववासना
त्मेत्यर्थः॥ एतेन कारणान्यथ कार्याणि सहकारीणि यानि च॥ रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥ विभावा अनुभावास्तत्कथ्यंते व्यभि राम:
चारिण इति सर्वानुमतनिबंधसूत्रे विभावानुभावव्यभिचारिपदं चालोकयतां लौकिके रसे विभावादिशब्दाभिधेयैर्निष्पत्तिं जानतामत एव ६१

रसपदार्थत्वविपर्ययं मन्यमानानामाधुनिकानां लौकिके भेदे ग्रंथकृन्मात्रोत्प्रेक्षामूलकताप्रयुक्तानादरणीयता ग्रंथिः शिथिलिता भव
ति॥ एतदपि कल्पनामात्रमिति तु माशंकिष्ठाः॥ किंतु प्रायो नाल्पं प्रतिप्रोक्ता भरताद्यै रसस्थितिः॥ यथामतिमयाप्येषा काव्य प्रतिनिग
द्यते इति रुद्रग्रंथं प्रागेषिष्ठाः॥ अत्र वासनात्मना स्थितस्यापि स्थायिनः सर्वस्यैव कालांतरीणस्य स्वात्मव्यवहितप्राक्कालीनलौकिकसन्नि
कर्षजन्यत्वाद्रसपदार्थप्रविष्टस्यापि स्वरूपे तथात्वं न भेदकं किंतु रसोत्पत्तिनिदानभूतव्यंजकविभावानुभावव्यभिचार्यन्यतमचर्वणोत्पत्तौ
लौकिकसंनिकर्षजन्यत्वं तथा॥ यत्र विभावाद्येकतरत्र लौकिकसंनिकर्षस्तद्व्यतिरिक्तोभयत्रत्वलौकिकस्तत्रापि लौकिकभेदतासिद्ध्य
र्थमन्यतमत्वेन त्रयाणां निवेशः॥ यद्यपि व्यभिचारिणामांतरतया न कदापि लौकिकसंन्निकर्ष इति तदुपादानमनर्थकमिति प्रतिभाति॥

लौकिकसन्निकर्षजन्मालौकिकोः लौकिकसंनिकर्षजन्मात्वलौकिकः॥ लौकिकः संनिकर्षः षोढा विषयगतः॥ अलौकिकः सं
निकर्षो ज्ञानं॥ तेषु चानुभूतेषु साक्षादेतज्जन्मानानुभूतेषु प्राक्तनसंस्कारद्वारा ज्ञानमेव प्रत्यासत्तिः॥

तथापि स्वाभिव्यंजकविभावानु
भावलौकिकसंनिकर्षस्य नस्वाभिव्यंजकव्यभिचार्याद्यभिव्यंजकविभावानुभावलौकिकसंनिकर्षस्यापि लौकिकभेदतानियामकत्वमेव यु
क्तं न तु तत्रालौकिकभेदत्वमित्याविष्कर्तुं तदुपादानमिति मंतव्यं॥ इत्थं च विभावमात्रस्य संयोगसंनिकर्षमात्रग्राह्यत्वेपि गुणक्रियातद्
तवैजात्यादिघटितमूर्तिकानामनुभावानामिंद्रियषट्केनापि यथायथं ग्रहसंभवात्तार्किकसमुपदर्शितसन्निकर्षभेदषट्केनाध्यक्षस्यैव र
सस्यापि भेदषट्कं समायातीत्यभिप्रायेणाह॥ सामान्यलक्षणायोगजयोस्तत्र प्रसिद्धयोरपि प्रकृतानुपयोगादाह॥ ज्ञानमिति॥ ज्ञानमेवेत्य
र्थः॥ स्वाश्रिके भेदे ज्ञानात्मनः सन्निकर्षस्यासंभवमाशंक्याह॥ तेष्विति॥ विभावादिष्वित्यर्थः॥ इयं च सप्तमी॥ साक्षात्॥ विभावानुभावव्यभि

वाक्षिकवर्णमालाविशिष्टविशिष्टलक्षणा
मत्स्यापि मल्लिकसंबंधः॥

६२ इदं वज्ज्ञानमेव प्रत्यासत्तिरित्यग्रेतनेनान्वितं॥ एतज्जन्मानतुभूतेष्वपीति॥ स्वाश्रिकादिपदार्थेष्वपीत्यर्थः॥ संस्कारद्वारानादृश्यवर्वणाव्यव हितप्राक्कालिकः जन्मांतरीणानुभवजन्यसंस्कारप्रत्यासत्त्याप्रत्यासत्तमित्यर्थः॥ ज्ञानमेवेति॥ जन्मांतरीयानुभवोभवत्येव प्रत्यासत्तिरितिभा वः॥ अलौकिकं विभजते॥ उपनयस्य सर्वत्राविशेषेपि सामग्रीवैचित्र्यसंपादकत्वप्रमनोरथयोर्विभाजकतास्फुटमभिहितेवेतितृतीयस्यवि षयं दर्शयति॥ काव्यनाट्ययोस्तु न परस्परं सामग्रीवैचित्र्यसंपादकत्वमेकप्रमाणत्वादितिभावः॥ यद्यपि काव्यइत्येवसुवचं तथापि प्रसं गाद्युक्तिभंग्याकाव्यलक्षणमप्युक्तं भवतीतीत्थमभिहितं॥ तथाहि॥ काव्यभूतौ यौ पदपदार्थौ तयोश्चमत्कारइत्युक्त्या चमत्कारिणौ पदपद र्थौ काव्यमित्यभिहितं रुदभिहितइत्युक्तत्वात्तुतात्पर्यविरुद्धएवार्थः शब्दादवगम्यतइतिबोध्यं॥ इत्थमपि विशेष्यविशेषणभावव्यत्यासः

अलौकिकोरसस्त्रिधा॥ स्वाप्निकोमानोरथिकऔपनायकश्चेति॥ औपनायकश्च काव्यपदपदार्थचमत्कारे॥

किमर्थमितिचेत्॥ चमत्कारेलोकोत्तरत्वरूपमुख्यत्वप्रतिपत्त्यानुगुण्याय॥ एतस्यायेवहेतवेकर्णवलस्यालौकिकत्वप्रतिपिपादयि षयात्रभवद्भिर्बादरायणचरणैः पदपरिमिताभूः खनीकृतेतिविवक्षितेसशैलवनकाननोत्कृष्टेतिकर्णवर्णनपरपर्वण्यभिहितं॥ अन्य थातत्रापि पीठारूढस्य पीठाकर्षणवत्कृत्यसाध्यताप्रतिपत्त्याकालुष्यापत्तेः॥ तदुक्तंमम्मटभट्टैः॥ तददोषौशब्दार्थौसगुणावनलंकृतीपु नः क्वापि॥ अस्यार्थः॥ अदोषौदोषशून्यौसगुणौगुणवंतौमाधुर्यौजः प्रसादभेदभिन्नगुणवद्रसव्यंजकाविति यावत्॥ क्वपुनरिति॥ क्वचि त्त्वित्यर्थः॥ अभिमुखात्मकरसभेदसत्वइति यावत्॥ अनलंकृती॥ नञोल्पार्थत्वादल्पत्वस्य चास्फुटत्वएव पर्यवसानादस्फुटालं कारवंतावपीत्यर्थः॥ अपिनायत्रनाभिमुखोरसस्तादृशौ तुस्फुटालंकारौ पदपदार्थौ संगृह्येते॥ इत्थंचानलंकृती पुनः क्वापीत्यनेनाभि नौका

गुमः ६२

काव्यमितिज्ञेयमिति॥तत्रचदोषगुणालंकाराणामननुगमेपिलोकोत्तराल्हादरूपचमत्कारजनकतावच्छेदकत्वेनानुगतीकृतानां
तेषांसर्वेषामत्रांतर्भावः॥तथाचैतस्यापिप्रदर्शितार्थएवपर्यवसानांतेचदोषगुणालंकाररसास्वादप्रतिबंधकत्वकाव्यशोभासंपाद
कत्वकाव्योत्कर्षाधायकत्वरूपाबहुविधाःप्रत्येकंमंमटभट्टादिभिर्विततीकृत्यदर्शिताविस्तरभियानदर्श्यंते॥अतएवज्योत्स्नाभि
सारिकयाकृष्णाभिसारिकयाविरहिण्यावासमुदीरितेःभिसरणविधितन्निषेधजीवनकथातिशयतात्पर्यकेविधौमेंडलमुद्यतमित्या
दिनिरलंकारादावपिकाव्यत्वसिद्धिःनिरुक्तानुगतरूपाक्रांतस्यरसस्यनिष्पत्तौसमर्थस्यविभावस्यप्रतिपादकत्वात्॥लोकोत्तरत्वंचाल्हा
देसकलसहृदयसंविदेकगोचरोजातिविशेषः॥नन्वेवमननुगतगुणालंकारादिजन्यतावच्छेदकत्वंनस्यानसंभवतीतिचेन्न॥तदे
तज्जातिव्याप्याजातयःसंत्येवताएवसकलानुभवसाक्षिकत्वस्तज्जन्यतावच्छेदिकाइत्येतावतापिस्वव्याप्यतादृशजात्यवच्छिन्नजन्य
तानिरूपितजनकतावच्छेदकत्वेनानुगमस्यनिर्व्यलीकत्वात्॥एतेनचमत्कारजनकतावच्छेदकधर्मस्वरूपकाव्यत्वग्रहंविनाचम
त्कारजनकताग्रहोऽशक्यस्तज्जनकताग्रहंविनानहृदितकाव्यत्वग्रहोपितथेतिपरस्पराश्रयः॥नचविभावादिमत्त्वमेवचमत्कारज
नकतावच्छेदकमितिवाच्यं॥तथापितानिचेन्नास्यकाव्ययोरित्युक्तत्वाद्विभावत्वग्रहात्काव्यत्वग्रहाधीनादेवजनकताग्रहः॥जनकता
ग्रहेत्वतदवच्छेदकत्वस्वरूपकाव्यत्वग्रहइतिह्यनतिरतचक्रकस्यदुर्वारत्वादितिदूषणमलग्नकंवेदितव्यं॥विच्छित्तिविशेषनीवानुग्र
णालंकारादिप्रभेदानामेवप्रातिस्विकरूपेणजनकतावच्छेदकत्वात्॥उक्तानुगतरूपेणचतेषामेवकाव्यत्वरूपत्वाच्च॥नहिप्रातिस्वि
करूपानुगतरूपयोःपरस्परसापेक्षग्रहकत्वमितिकृतान्योन्याश्रयादिः॥एवंस्थितेकाव्यलक्षणेकाव्यत्वंशब्दार्थयोर्व्यासक्तंप्रत्येकप
र्याप्तंवेतिविप्रतिपत्तौदंडिप्रभृतयोवर्णयंति॥शरीरंतावदिष्टार्थव्यवच्छिन्नापदावलीति॥इत्यमेवहितद्दोषौशब्दार्थावित्यत्रार्थविशे

र.न. पविशिष्टशब्दस्यविशेष्यतात्मकमुख्यतयाभ्यर्हितत्वेनपूर्वनिपातोभ्यर्हितंपूर्वमितिस्मृतेः॥अन्यथाजाड्यदंतत्वेनार्थशब्दस्यैवपूर्वनि नौका
६३ पातापत्तेः॥नचैवंगुणप्रधानभावेद्विवचनानुपपत्तिरितिवाच्यं॥आधानेदंपत्योरिवतदुपपत्तेः॥गुणप्रधानभावेपिजायापतीअग्निमाद
धीयातामित्यत्रतद्दर्शनात्॥नचतत्रयत्कर्तव्यंतदनयासहेत्यप्रधानत्वतृतीयानिर्देशरूपबाधकबलात्तथाभ्युपगतं॥इहतुद्वयोस्तथात्वे
नकिंचिद्बाधकमितिवाच्यं॥काव्यत्वजातेर्व्यासज्यवृत्तित्वाभ्युपगमगौरवस्यैवतथात्वादर्थस्यसिद्धत्वेनलोकोत्तरवर्णनानिपुणकविकर्मका
व्यमितिसमाख्याविरोधाच्च॥मिश्रास्तु॥काव्यपदप्रवृत्तिनिमित्तंहिकाव्यत्वं॥तच्चान्वयव्यतिरेकाभ्यांरसएवेतिनातिरिक्तजातौमानं॥तथाच
बाधकाभावाद्द्विवचनस्यौत्सर्गिकस्वभावहानेमानाभावः॥नचसमाख्याविरोधोमूर्धाभिषिक्तंबाधकमितिवाच्यं॥अर्थस्यापिविभावादिरू
पत्वेनविभावपदप्रवृत्तिनिमित्तभावनायाःक्वापिकारणेकविकृतिविषयत्वस्यवक्तुंशक्यत्वात्॥तस्मादुभयत्रैवकाव्यत्वमित्याहुः॥नव्यास्तु॥
लोकोत्तराह्लादजनकज्ञानगोचरार्थप्रतिपादकशब्दत्वंकाव्यत्वं॥लोकोत्तरत्वंचचमत्कारत्वापरपर्यायोजातिविशेषः॥पुनःपुन
रनुसंधानात्मकभावनाजन्यतावच्छेदकोप्येषप्रत्यक्षसिद्धः॥तथाविधतदादिसर्वनाम्नितदेतल्लक्षणातिव्याप्तिर्दुर्वारैवेतिचेत्॥यस्य
योज्यतादृशार्थविषयभावनात्वंचमत्कृतिजनकतावच्छेदकंतत्त्वमित्यर्थात्॥एवमपियत्वतत्त्वाननुगमएवेतिचेत्॥स्वविशिष्टजनक
तावच्छेदकार्थप्रतिपादकत्वसंबंधेनतादृशजातिमत्त्वमनुगतमेवहि॥शब्दार्थयुगलंतुनकाव्यशब्दवाच्यंमानाभावात्॥काव्यमुच्चैःपठ्य
तेकाव्यादर्थोवगम्यतेकाव्यंश्रुतमर्थोनज्ञातइत्यादिविश्वजनीनव्यवहारतःशब्दविशेषस्यैवकाव्यपदार्थत्वप्रतिपत्तेः॥व्यवहारःशब्दमा
त्रेलक्षणयोपपादनीयइतिचेत्॥स्यादेवंयदिकाव्यपदार्थतयापराभिमतेशब्दार्थयुगलेकाव्यशब्दशक्तेःप्रमापकंदृढतरंकिमपिप्रमाणं रामः
स्यात्॥तदेवतुनपश्यामः॥विमतवाक्यंत्वश्रद्धेयमेव॥इत्थंचासतिकाव्यशब्दस्यशब्दार्थयुगलेशक्तिग्राहकेप्रमाणेप्रागुक्तव्यवहारतः ६३

शब्दविशेषेसिद्धांतीं शक्तिं कोनामनिवारयितुमीष्टे ॥ नचैवंतददोषौशब्दार्थावितिमंमटग्रंथोविरुद्ध्यतइतिवाच्यं ॥ ऋगताविति
धातोरौणादिकेथप्रत्ययेनिष्पन्नस्यार्थशब्दस्यार्यमाणमात्रपरतयाज्ञायमानइत्यर्थकत्वात् ॥ कृतेकुशेषयोः शब्दपदार्थपदयोः क
र्मधारयसमासेद्विवचनबलाद्रमणीयार्थप्रतिपादकतावच्छेदकानुपूर्वीविशिष्टशब्दोकाव्यमित्यस्यैवतदर्थत्वात् ॥ नचैवमर्थशब्द
स्यपूर्वनिपातापत्तिरितिवाच्यं ॥ विशेषणंविशेष्येणबहुलमितिबहुलग्रहणात् ॥ कथमन्यथैकवीरेत्यादयः प्रयोगाः ॥ नचपूर्वकालैकस
र्वजरत्पुराणनवकेवलाः समानाधिकरणेनेत्यनेनैकवीरेतिसिद्ध्यदितिवाच्यं ॥ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्चे
त्यस्यपरतयातद्बाधकत्वात् ॥ नचैवमसाधुःशब्दोदुर्लभइतिवाच्यं ॥ यतोष्टाध्यायीलक्षणलक्ष्यतयासंदिह्यमानाअपिशिष्टरूपदिष्टा
स्त्वसाधवोन्येचभूयांसस्तेसुलभाअसाधवः ॥ केतेशिष्टाइतिचेत् ॥ शृणु ॥ येष्टाध्यायीलक्षणलक्षितत्वेननिर्णीतान्बहुतरान्नैसर्गिकात्सा
त्प्रयुंजानाव्याकरणानभिज्ञाअपियंकंचनागतिकगतिकलक्षणेतरयावल्लक्षणालक्ष्यमपिप्रयुंजतेतेत्रभवंतः शिष्टाइति ॥ तत्रैवंतावद
ध्यवसीयतेयदसौशब्दोनिरुक्तलक्षणलक्ष्यइति ॥ तदिदंपृषोदरादीनीतिसूत्रभाष्येमहताप्रबंधेननिरूपितं ॥ तत्किंमंमटभट्टैः क्वाप्य
पभाषितंयेनशिष्टानभवेयुरित्यलमाग्रहेणेतिप्राहुः ॥ अत्रब्रूमः ॥ चमत्कृतंवक्तीतिप्रयोगस्यचमत्कारप्रयोजकंवक्तीत्यर्थकतयापीहोपा
धिरित्यस्यहोपाध्यव्याप्यत्वमित्यर्थकतयैवोपपत्तेः स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकत्वस्यविशिष्टबुद्धिनियामकस्यसंबंधत्वेमाना
भावात्स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतावच्छेदकानुपूर्वीविशिष्टशब्दस्यकाव्यत्वंवाच्यंतत्रार्थप्रतिपादकतावच्छेदकानुपूर्व्युप
लक्षणंविशेषणंवाद्येवर्णानांनित्यत्वेनान्यादृशानुपूर्वीविशिष्टानामपियदाकदाचित्तादृशानुपूर्वींविशिष्टत्वाल्लोकप्रसिद्धपाठानांस्पर्शी
नांसमुदायेतिव्याप्तिरितिविशेषणतापक्षएवादर्तव्यस्तथाचकाव्यत्वघटकीभूताः सर्वेप्यवपदार्थास्तत्रतत्रविशेषणतयैवनिविशंतेन्यथो

रूप्रायदोषापत्तेस्तस्माद्विशेषणेषु काव्यत्वं विना विशेषणविशिष्टविशेष्ये प्यसंभवत्तत्सर्वेष्वेव तेषु सिद्ध्यति॥ पदपदार्थद्वयमात्रोपादा
नं तु काव्यशरीरप्रविष्टविशिष्टार्थप्रतिपादकतावच्छेदकयोजितवाक्यनिष्ठानुपूर्व्युपस्थापककाव्यशरीरप्रविष्टशब्दनिष्ठानुपूर्वीवै
जात्यं विभिन्नकाव्यत्वाव्यवहारप्रयोजकं नतु शब्दस्यार्थस्य द्वयोरनयोश्शब्दानुपूर्वीव्यक्तेर्वा भेदस्तथैव तर्हि सर्वमेव काव्यं यथोक्तव्यवहा
रविषयः स्यात्॥ अर्थविशेषप्रतिपादकतावच्छेदकानुपूर्वीवैजात्यस्य तथात्वे पि सभंगश्लेषकाव्यभेदव्यवहारापत्तेरित्यर्थस्फोरणायेति
॥ तस्य च कारणं कविगता केवला प्रतिभा॥ सा च काव्यघटनानुकूलपदपदार्थोपस्थितिः॥ तद्गतं च प्रतिभात्वं काव्यकारणतावच्छेदकतया
सिद्धो जातिविशेषः॥ चाक्षुषत्वादिना सांकर्यैण्यखंडोपाधेर्निराबाधत्वात्॥ तादृशप्रतिभात्वव्याप्यं च धर्मद्वयं॥ एकं देवतामहापुरुषप्रसा
दजन्यादृष्टस्यैकं च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासयोर्जन्यतावच्छेदकं॥ नतु त्रयमेव मिलितं प्रतिभासामान्ये हेतुः॥ बालादेस्तौ विनापि
केवलान्महापुरुषप्रसादादपि प्रतिभोत्पत्तेर्दृष्टत्वात्॥ नच तयोस्तत्रजन्मांतरीणयोः कल्पनमिति वाच्यं॥ गौरवात्॥ मानाभावात्॥ कार्यस्यान्य
याप्युपपत्तेश्च॥ लोके हि बलवता प्रमाणेनागमादिना सति कारणताविनिर्णये पश्चादुपस्थितस्य व्यभिचारस्य वारणाय जन्मांतरीयमन्यथानु
पपत्त्या कारणं धर्मादि कल्प्यते॥ अन्यथा तु व्यभिचारोपस्थित्या पूर्ववृत्तकारणताविनिर्णये भ्रमत्वप्रतिपत्तिरेव जायते॥ नापि केवलमदृष्टमेव कार
णमित्यपि वदितुं शक्यं॥ कियंतं चित्कालं काव्यं कर्तुमशक्नुवतः कथमपि संजातयोर्व्युत्पत्त्यभ्यासयोः सतोः प्रतिभायाः प्रादुर्भावस्य दर्शनात्॥ त
त्रादृष्टस्वीकारे तु ताभ्यां प्रागपि तस्याः प्रसक्तेः॥ नच प्राक् प्रतिभाप्रतिबंधकमदृष्टांतरमस्तीति वाच्यं॥ तादृशानेकस्थलगतादृष्टद्वयकल्प
नापेक्षया क्लृप्तव्युत्पत्त्यभ्यासयोरेव प्रतिभाहेतुत्वकल्पने लाघवात्॥ तस्मात्प्रागुक्तसरणिरेव ज्यायसी॥ प्रतिभात्वं च कवितायाः कार
णतावच्छेदकमिति प्रागुक्तप्रतिभागतवैलक्षण्यमेव वा विलक्षणकाव्यस्येति वा न व्यभिचारः॥ नच सतोरपि व्युत्पत्त्यभ्यासयोर्यत्नप्र

तिभोत्पत्तिस्तत्रान्वयव्यभिचारइतिवाच्यं॥ तत्रतयोस्तादृशवैलक्षण्येमानाभावेनकारणतावच्छेदकानवच्छिन्नत्वात्॥ पापविशेषस्यप्रति
बंधकत्वकल्पनाद्वानदोषः॥ प्रतिबंधकाभावस्यचकारणतासमुदितशक्त्यादित्रयहेतुतावादिनः शक्तिमात्रहेतुतावादिनश्चाविशि
ष्टा॥ प्रतिवादिनामंत्रादिभिः कृतेकतिपयदिवसव्यापिनिवाकुस्तंभेविहितानेकप्रबंधस्यापिकवेःकाव्यानुदयस्यदर्शनात्॥ तदिदं
काव्यंचतुर्विधं॥ उत्तमोत्तममुत्तमंमध्यममधमंचेति॥ यत्रशब्दार्थौगुणीभावितात्मानौलोकोत्तराल्हादकारिणमर्थमभिव्यक्तस्तदाद्य
॥ परांगस्यैववाच्यसिद्ध्यंगस्यापिव्यंग्यस्यचमत्कारकारितयातिप्रसंगवारणायगुणीभावितात्मानावितिशब्दार्थापेक्षयाव्यंग्यप्राधान्याभि
प्रायकं॥ अतिगूढव्यंग्यनिरासायलोकोत्तराल्हादकारिणमिति॥ यत्रव्यंग्यमप्रधानमेवदुर्दैववशतोदासमनुभवद्राजकुलत्रमिवचमत्का
रकारणंतदुत्तमं॥ वाच्यापेक्षयाप्रधानीभूतंव्यंग्यांतरापेक्षयाचगुणीभूतंयद्व्यंग्यंतदाप्यध्वनावतिव्याप्तिवारणायावधारणं॥ लीनव्यंग्यवा
च्यचित्रातिप्रसंगवारणायचमत्कारेति॥ यत्रव्यंग्यचमत्कारासमानाधिकरणोवाच्यचमत्कारस्तन्मध्यमं॥ यत्रार्थचमत्कृत्युपस्कृताशब्द
चमत्कृतिः प्रधानंतदधमं॥ समप्रधानशब्दार्थचमत्कारेमध्यमेतिव्याप्तिवारणायोपस्कृतांतंशब्दचमत्कृतिविशेषणं॥ एवमेवयद्यपि
यत्रार्थचमत्कारासमानाधिकरणाशब्दचमत्कृतिस्तदधमाधमंकाव्यंकाव्यविधासुगणयितुंसांप्रतं॥ यथाममा॥ कोकिलाकलकलेकलि
कालेलोलकेकिकुलकेलिकलाके॥ काकुलालककककाकुकुलाले: किंकुलाकिललल्लोकुलिलीलामिति॥ यदिचात्रकुलटारभावसंतका
लायुद्दीपितोविपरीतसुरताख्यःशृंगारोपिसहृदयमात्रसाक्षिकःसम्राब्दचमत्कृतोगुणःकलिलीलापदमपिकथंचित्तदनुगुणमेवेत्या
गृह्यतदधममेवेत्युच्यतेतदापितारतारतरैरेतैरुत्तरोत्तरतोरुतैः॥ रतातोतित्तिरीरीतितीरेतारेतरोतरावितितित्तिर्यग्वृत्तांतार्थकेपद्यमेवमे
कांक्षरपद्यार्द्धारत्तिपद्यबंधादिमहाकविनिबद्धंतथाद्रष्टव्यं॥ तथापिरमणीयार्थप्रतिपादकशब्दत्वरूपकाव्यसामान्यलक्षणायोगाद्

र.त. ६५

स्तुतः काव्यत्वाभावेन प्राचीनपरंपरामात्रमनुरुंधानैर्महाकविभिस्तत्रतत्रकाव्ये निबद्धमपि नैवोनोक्तिकृदिति मंतव्यं॥ अत्र शब्दार्थयच
मत्कारभेदेनबृहदंतरयोरपिद्वयोरेकभेदत्वांगीकारे व्यंग्यप्राधान्याप्राधान्यकृतमपि भेदद्वयमीषदंतरमेकभेदतामुपयातीति द्विविधमेवका
व्यं भवेदिति त्रैविध्यप्रदर्शनं राज्ञामाज्ञामात्रमिति विभावनीयं॥ तत्राद्यप्रभेदात्मकासंख्यप्रभेदस्य ध्वनेः सामान्यतः केचनभेदा उच्यंते॥ ध्व
निस्तावद्द्विविधः॥ अभिधामूलो लक्षणामूलश्च॥ तत्राद्यस्त्रिविधः॥ रसवस्त्वलंकारभेदात्॥ रसध्वनिरित्यलक्ष्यक्रमोपलक्षणाद्रसभावतदा
भासभावशांतिभावोदयभावसंधिभावशबलतानांग्रहणं॥ द्वितीयश्च द्विविधोर्थांतरसंक्रमितवाच्योत्यंततिरस्कृतवाच्यश्च पुनरुक्त्यनुप

नात्येव॥ परंतु द्वयोरप्यानंदरूपता॥ ननु मानोरथिको रसो न प्रसिद्ध इति चेत्सत्यं॥ अस्माकं तु मनोरथोपरचितप्रासादवापी
तटक्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयत इत्यादौ मानोरथिकशृंगारश्रवणात्॥ शास्त्रेसुखस्यत्रैविध्यगणना
च्च॥ रसेन विना च सुखानुत्पत्तेरिति॥ तत्र विशेषाः॥ यदाहभरतः॥ शृंगारहास्यकरुणरौद्रवीरभयानकाः॥ योगाभ्यां शक्यस्यैव रूपां

तरेण प्रतिपादने आद्यः॥ विरोधतदतिरिक्तसंबंधाभ्यां शक्यसंबंधिनो शक्यस्य प्रतिपादने त्वंत्यः॥ एवं पंचविधे ध्वनौ परमरमणीयतयासक
लमूर्धन्यो रसध्वनिरिति रस एव सप्रपंचं ग्रंथकृता निरूपित इत्यलमतिविस्तरेण॥ नार्द्रीनामाहार्याद्यभिनयचतुष्टयं॥ स्वाप्निकं मानोरथि
कं योर्द्वःस्वाद्यात्मकत्वेपि काव्यनाट्ययोरेकरूप एव रस इत्याह॥ अस्माकं त्विति॥ धन्यानां गिरिकंदरे निवसतां ज्योतिः परं ध्यायतामा
नंदाश्रुजलं पिबंति शकुना निःशंकमंकेशया इति पूर्वार्द्धं॥ श्लोकार्थः स्पष्टः॥ विप्रतिपन्नं प्रत्यर्थंतत्वं व्याचष्टे॥ अद्भुत एवैको रस इति नारायण
प्रभृतयः॥ शृंगार एव रस इत्यपि केचिदालंकारिकाः॥ तेहादशेति चाप्याधुनिककवयः॥ तत्सर्वमयुक्तमिति दर्शयिष्यन्विवक्षितार्थं दर्शयति॥ बीभ

नोका

रामः ६५

तथाचकाव्येप्येतावंतदृत्यविवादमित्यभिप्रायः॥सकलाधिदैवतंजगदंतरात्मा॥ननुकिंनामविस्रोःशृंगारदेवतात्वं॥शृणु॥निखिला
श्रितरत्यालंबनत्वेसतिदेवतात्वंतत्त्वमित्येके॥निखिलविषयरत्याश्रयत्वेसतिदेवतात्वंतत्त्वमित्यन्ये॥तत्तद्व्याप्यिमयप्रकृतिकत्वेस
तिदेवतात्वंतत्तत्त्वमितिबहवः॥द्वादशरसवादिमतमपाकर्त्तुंशंकते॥एतेषांप्रतिनियतस्थायिभावानाह॥समाधत्ते॥मुख्यरसाभावे
रतेर्व्यभिचारिताप्यसंगतैवेतिमत्वापृच्छति॥उत्तरयति॥वात्सल्यइति॥इयंचसतिसप्तमी॥एवमग्रेपिकरुणइति॥पुष्यतीतिशेषः॥एवम

बीभत्साद्भुतसंज्ञौचनाट्येचाष्टौरसाःस्मृताः॥सकलाधिदैवतंविस्नुःसचशृंगारस्यापिदैवतं॥तेनसकलाकांक्षाविषयत्वेनाराध्य
तयाचप्रथमंशृंगारोपन्यासः॥ननुवात्सल्यंलौल्यंभक्तिःकार्पण्यंवाकथंनरसः॥आर्द्रताभिलाषश्रद्धास्पृहाणांस्थायिभावानांतत्र
सत्वादितिचेन्न॥तेषांव्यभिचारिरत्यात्मकत्वात्॥ननुकस्यरसस्यतेव्यभिचारिभावाभवेयुरितिचेत्सत्यं॥वात्सल्येकरुणएवरसो
लौल्येहास्योभक्तौशांतःकार्पण्येपिहास्यएव॥नन्वेवंपरत्रकॢप्तत्वादत्रव्यभिचारित्वेनावश्यकत्वाद्धर्मिकल्पनातोधर्मकल्पना
यालघुत्वाद्व्यभिचारिणीरतिरेवास्तुकिंकरुणेनेतिचेन्न॥रतेःशोकइतिशोककारणतायांरतेरुपक्षयात्॥किंचरतेःकस्यरसस्य
व्यभिचारित्वं॥नशृंगारहास्यरौद्रवीराणां॥युवमिथुनपरस्परप्रीतिहासक्रोधानंदानांतत्राभावात्॥नवाबीभत्सस्याजुगुप्साया
स्तत्राभावात्॥

अग्रेपि॥तथापिसंख्यानियमस्त्वदुक्तस्त्वसंगतएवेतिशंकते॥परत्रशृंगारेअत्रकरुणे॥धर्मिकल्पनातःप्रधानरसांतरकल्प
नातः॥धर्मकल्पनायाःगुणतयावश्यकल्प्यरतिमात्रकल्पनायाः॥लघुत्वादेकमात्रविषयत्वात्॥उपक्षयादिति॥तथाचकरुणचर्वणापर्यंतंरतेर
सत्वान्नरत्याशोकोगतार्थइतिभावः॥करुणंविनारतेर्व्यभिचारितापिनोपपद्यतइत्याह॥आनंदानामित्युत्साहानामित्यर्थः॥क्वचित्तथैवपाठः॥स्त

स्थायिनामितिशेषः॥विद्युद्द्योतप्रायत्वादितिभावः॥

र. ६६

उपसंहरति॥यद्यपिहास्येप्येवकरणन्यायोतिदेष्टुंशक्यस्तथाप्यधिकंवक्तुंपृथगाशंकते॥अधिकाशंकाभूमिकामारचयति॥सांकर्यमिथोव्यभिचार:॥ननुरतिकरुणयोरेकतरव्यभिचारवद्रतिहास्ययोरेकतरव्यभिचारस्याप्यभावेकथंपार्थक्यमित्याशंकते॥स्थायिभावभेदेरससांकर्यंनदोषायेत्यभिप्रेत्यसमाधत्ते॥पौन:पुन्येनाभिव्यक्तिरित्यर्थ:॥अभिप्रायंविशदयति॥उक्तन्यायमन्यत्रातिदिशति॥एवंरसभेदंविनारतेर्व्यभिचारित्वानिर्वचनं॥ऊह्यमिति॥रतेरिवविस्मयस्याप्यस्थिरत्वादन्येषामसंभवादितिभाव:॥स्थाय्यसाधारण्यंप्रकृतेपीतिशंकते॥तथाचनत्त

नाप्यद्भुतस्य॥विस्मयस्यतत्रास्थिरत्वात्॥तस्माच्छोकस्स्थायितयाशोकस्थायिभावक:करुणाख्योतिरिक्तोरसइति॥ननुरतिरेवास्तुकिंहास्येनेतिचेत्कस्यासौव्यभिचारिणीकरुणरौद्रवीरभयानकबीभत्सानांतत्रानवकाशात्॥नाप्यद्भुतस्य॥विस्मयस्यतत्रास्थिरत्वात्॥नशृंगारस्य॥रते:स्थायित्वाभावात्॥परंतुरत्यासहहास्यस्यसांकर्यं॥ननुरतिहास्ययोरसंकीर्णस्थलाभावात्पृथक्त्वंकथंस्यादितिचेन्न॥हेतोरसाधारण्यात्॥असाधारण्यमत्रस्थायित्वं॥यथारतिसांकर्येपिस्थायिशोकादसाधारणात्कारणात्करुणोभिव्यते तथातत्सांकर्येपिस्थायिहासभावादसाधारणात्कारणाद्धास्योभिव्यते॥शांतेप्येवमूह्यं॥नचवात्सल्यादावप्यसाधारणाहेतवआर्द्रतादय:संत्येवेतितेषामपिरसत्वापत्तिरितिवाच्यं॥आर्द्रतादीनामपिरतित्वात्॥तस्माच्चतत्रासाधारण्येशृंगाररसत्वापत्ति:॥

स्याद्वात्सल्यस्थायित्वमितिभाव:॥अत्रविप्रतिपन्नंप्रत्याह॥नचस्त्रीपुंसविषयत्वाभावेकथंशृंगाररसत्वापत्तिरितिवाच्यं॥रतिसंभूतस्त्रीपुंसविषयकशोकप्रकृतिकतयावश्यकल्प्यकरुणपोषकरतित्वेनैवोपपत्तौरसांतरेमानाभावादित्याशय:॥ननुतत्रैवरतिप्रकृतिकत्वंतत्संभूतशोकप्रकृतिकत्वंवेत्यत्रविनिगमनाविरहइतिचेत्॥रसांतरेविजातीयप्रकृतिकत्वेसंभवतिरसांतरप्रकृ

नोका

रामः ६६

तद्विरुद्धानुभावैस्तद्विजातीयप्रकृतिकत्वस्याध्यवसायाच्चेति॥तदिदमुक्तमुपस्थापादिति॥स्वरूपसतोरुत्साहक्रोधयोरविनाभावादेकतर
रव्यभिचारित्वमेवयुक्तमित्याशंकते॥समाधत्ते॥वीरेक्रोधस्यव्यभिचारित्वेपिरौद्रेस्थायित्वात्॥उत्साहस्यरौद्रेव्यभिचारित्वेपिवीरेस्थायित्वा
त्॥विनिगंतुमशक्यत्वाच्चद्वयोरप्यविप्रतिपन्नत्वमित्याह॥स्थाय्यवच्छिन्नानंदस्यानंदावच्छिन्नस्थायिनोवारसपदार्थतयोक्तत्वात्तदनुसारे
णशृंगारंलक्षयति॥युवाचयुवतिश्चयुवानौतयोरितिपूनस्तिरितिसूत्रविहितप्रत्ययांतेनसहैकशेषः॥अन्यथातल्लक्षणमात्रकृतविशेषा
भावेनैकशेषाप्रसक्तेः॥परस्परंपरिपूर्णःपरस्परयथोचितविभावानुभावव्यभिचारिनिष्ठत्वरत्यवच्छिन्नः॥प्रमोदआनंदः॥सम्यगिति॥औचि

ननूत्साहक्रोधानुभयत्रतस्माद्वीररौद्रयोरन्यतरएवरसोवर्ततामितिचेन्न॥स्थायिभेदेनभेदात्॥उत्साहवासनावीरेनतुरौद्रे॥
क्रोधवासनारौद्रेनतुवीरइति॥यूनोःपरस्परंपरिपूर्णःप्रमोदः॥सम्यक्परिपूर्णरतिभावोवाशृंगारः॥ ॥यूनोरेकस्य
प्रमोदस्याधिक्येन्यूनतायांव्यतिरेकेवापरिपूर्तेरभावाद्रसाभासइति॥सचद्विविधः॥संभोगोविप्रलंभश्चेति॥तत्रदर्शनस्पर्श
नसंलापादिभिरितरेतरमनुभूयमानंसुखं॥परस्परसंयोगेनउत्पद्यमानआनंदोवासंभोगः॥संयोगोवहिरिंद्रियसंबंधः॥ तेनेत्यर्थः

परिपूर्णोविभावानुभावव्यभिचारिभिर्भग्नावरणचिद्विशिष्टः॥रतिभावइतिस्थायिमध्यं॥उभयत्राप्यौचित्यघटनाप्रयोजनंदर्शयति॥यूनोर्मि
थोतंविभजते॥संभोगंलक्षयति॥तयोर्मध्ये॥अत्रदर्शनादीनामन्यतमत्वेनप्रवेशापेक्षयालाघवादाह॥वहिरिति॥एतेनानाश्लिष्टयोरपि
संभोगव्यवहारश्चिन्तासंगिनोरपिविप्रलंभव्यवहारश्चसूपपदइतिसूचितं॥वहिरिंद्रियसंबंधमात्रस्यापिसंभोगत्वेतदेकतराभिमानभूम्ना
विप्रलंभव्यवहारोदुर्घटइतिविशेष्यं॥वस्तुतस्तुफलोपहितफलोपधायकसामग्रीसमवहितावारतिःकिंवाद्विविधरत्यवच्छिन्नश्चिदानंदोहि

दृश्यं चोदाहरणभेदानुसरणमेतत्तात्पर्यकमपीति सारं॥ यद्यप्यमूर्त्तत्वाद्रसे वर्णसंभावना नास्ति॥ तथापि तत्तद्देवताभिरभेदाध्यवसायाद्ध
र्णव्यवहारः काव्यविदामिति मंतव्यं॥ यद्यपि मधुसूदनस्य चाटुवचनानि प्रियवाक्यानि स्तोभेन प्रलयस्वरभंगादिसात्विकभावसंपातेन पराह
तानि प्रतिबद्धानि बभूवुः॥ क्वचित्स्तंभेनेति पाठः स तु प्रागुक्तलक्षणलक्षिते स्तंभे वचनप्रतिबंधकत्वस्यानुभवबाधितत्वात्प्रामादिक एव॥ प
दि चेत्तस्य पाठप्रामाण्ये प्याग्रहस्तदा क्रियासामान्यप्रतिबंधकत्वस्य स्तंभलक्षणत्वाभिप्रायेण योजनीयः॥ तच्चोक्तमधस्तात्॥ किंच पाणिः पयो
धरगतः स्वस्य स्वपरकीयांतःकरणपरीक्षामात्रार्थकमार्तिकगुटिकाप्रक्षेपसमशीलां गाकृष्टिप्रतिपत्तिमात्रपरत्वान्ननायकारब्धत्वशं
काकालुष्यमावहेथाः॥ कथं वान्यथोत्तरार्द्धस्यावधारणपूर्वार्द्धस्य जाड्यं पराहतिं वा सार्थकयेः॥ तथा चात्र स्वगतातिरेतनस्थकृशब्दाभ्यांभूत

अस्य दैवतं विष्णुर्वर्णः श्यामः॥ यथा स्तोभेन चाटुवचनानि पराहतानि पाणिः पयोधरगतो जडतां जगाम॥ लक्ष्म्याः परं तु पृथुवे
पथुरेव नीवीं विस्रंसयन्मुहुरभून्मधुसूदनस्य॥ यथा वा निद्राणेक्षणमुन्नमय्य वदनं कांते कुचांतःस्पृशि स्रस्त व्यस्तदुकूलद
र्शितवलिप्रव्यक्तनाभिश्रियः॥ वर्तमानार्थकगौणमुख्यप्रत्ययांताभ्यामनिच्छेच्छापूर्वकत्वव्यक्त्या तदिच्छापूर्वकत्वप्रकारकान्यदीयनि
श्चयविशेष्यप्रथमव्यापारकत्वं तदारब्धत्वमिति सूचितं॥ जडतां जाड्यं जगाम प्राप परं तु लक्ष्म्याः पृथुवेपथुरेवासहायः कंपो नीवीम
त्रापि लक्ष्म्या इत्यनुषज्यते विस्रंसयन्नोचयन्मुहुरत्रापि मधुसूदनस्येत्यनुषज्यते तत्कार्यकारीति भावः॥ अभूज्जात इत्यर्थः॥ एतेनान्योवि
त्यपरिहारेण नायिकारब्धसंभोगमुदाहर्तुस्तामभिधानसौष्ठवमादर्शितं॥ नायिकारब्धसंभोगमुदाहृत्य नायकारब्धमप्येनमुदाहरति॥
निद्राणे निद्रामुकुलिते ईक्षणे चक्षुषी यस्य तथाभूतं यथा स्यात्तथा वदनमुन्नमय्योच्चैः कृत्वा कांते श्रीकृष्णे कुचांतःस्पृशि स्तनांतरालनिहिताग्रहस्ते

आदौ स्रस्तंशिथिलभूतंपश्चाद्ध्वस्तंगलितंयद्दुकूलंतेनदर्शितायावलेस्त्रिवलेःप्रव्यक्तायाःप्रकटायानाभेश्चश्रीर्यस्यास्तादृश्याराधायादृशो
र्विईषत्कंपमानकमलपत्रपुटगर्वासहिस्नुभिर्मदवद्भुलैरितियावद्दृक्कोणस्यतरंगितैरपांगपातैःकर्तृभिःस्मरःकामोदीर्घायुरेवातिभूमिं
गतएवविरचितःकृतइत्यर्थः॥यद्यप्येवमुभयारब्धोपिसंभवति॥यथाममम॥धनुर्लतेवाभिमुखीभवंतीगुणात्मतंतोरिवमौलिभाजः॥
सयप्रियस्याधरमापिबंतीसकंचयापापयतेंगनासेत्यादावेकतरारब्धत्वस्यानध्यवसायात्तथापीत्थमनेकविधोप्येषएकएवगण्यतइ
त्याह॥नायकयोरितिपुमान्स्त्रियेत्येकशेषः॥यद्यपिनायिकायाएवावस्थाभेदेनभेदोननायकस्यान्यथाखंडितादिभेदजीवातुपरपुंभोग

राधायादरघूर्णदुत्पलदलद्रोणीमदद्रोहिभिर्दृक्कोणस्यतरंगितैर्विरचितोदीर्घायुरेवस्मरः॥देशानांसमयानांनायिकानांचभे
देननायकयोरवस्थाभेदेनचबहवोभेदास्तेचरसमंजर्याविशेषतोदर्शिताइहपुनर्विस्तरभियानप्रदर्श्यंतइति॥अथहावा
निरूप्यंते॥तत्रभरतः॥लीलाविलासोविछित्तिर्विभ्रमःकिलकिंचितं॥मोट्टायितंकुट्टमितंविब्बोकोललितंतथा॥विहृतंचेति
विज्ञेयादशहावास्तुयोषितां॥नारीणांशृंगारचेष्टाहावः॥सचस्वभावजोनारीणां॥ विन्हितत्वस्यापिनायिकायामुद्भावनेतिनरामनो

विस्येनरसाभासापत्तिरित्यादिरसमंजर्यांप्रपंचितं॥तथाप्यत्रावस्थापदेनाजहत्स्वार्थलक्षणयानायकभेदनियामकस्वभावएवोपलक्ष्यतांनेता
वताकिंचिदपवीयतेग्रंथकृतः॥अत्रैवप्रसंगाद्धावान्निरूपयितुंप्रतिजानीते॥तानुद्दिशति॥योषितामित्यादिलक्ष्यनिर्देशः॥सामान्यतोलक्षय
ति॥नारीसंबंधीत्यर्थः॥शृंगारचेष्टेति॥संभोगशृंगारानुगुणोव्यापारविशेषइत्यर्थः॥आनुगुण्यंचपौर्वापर्येणसंबंधित्वं॥आनुगुण्येनव्यवह्रियमा
माणत्वंवेत्यन्यदेतत्॥नारीस्वभावविशेषनिष्पन्नइत्यर्थः॥ननुनारीजातिनियतइतिभावः॥तथाचनारीस्वभावजन्यत्वेसतिशृंगारानुगुणचेष्टात्वं

र॰न॰ उत्तरयति॥औपाधिकाउद्दीपकनिष्ठोत्कर्षरूपोपाधिसत्तानियतसत्ताकाः॥स्वभावजाउद्दीपकस्वरूपमात्रसत्तानियतसत्ताकाः॥आशयं नौका
६८ मविद्वान्शंकते॥एवंमन्यतेचेदित्यर्थः॥कथमिति॥स्वभावस्यचिरंतनत्वादितिभावः॥आशयमुद्घाटयन्समाधत्ते॥उद्दीपकस्वरूपमात्रेत्यर्थः
॥पुरुषाणांचोद्दीपकातिशयान्वयव्यतिरेकाभ्यांताविति शेषः॥तान्विभजते॥शारीराणिशरीरमात्राश्रितानि॥आंतराणिमनोमात्राश्रिता
नि॥उभयसंकीर्णमिति॥श्रमस्यशारीरत्वादभिलाषस्यांतरत्वाद्गर्वस्मितहर्षभयक्रोधानांस्वरूपतस्तथात्वेआंतरत्वात्फलतस्तथात्वेशारीर

ननुबिब्बोकविलासविच्छित्तिविभ्रमाःपुरुषाणामपिसंभवंतीतिचेत्सत्यं॥तेषांत्वौपाधिकाःस्वभावजाःस्त्रीणामेव॥नन्वेवंयदिता
संसदैवतेकथंनभवंतीतिचेत्सत्यं॥उद्दीपकान्वयव्यतिरेकाभ्यांनायिकानांहावाविर्भावतिरोभावाविति॥लीलाविलासविच्छित्ति
विभ्रमललितानिशारीराणि॥मोट्टायितकुट्टमितबिब्बोकविहृतान्यांतराणिकिलकिंचितमुभयसंकीर्णमिति॥प्रियभूषणवचना
द्यनुकृतिर्लीला॥तत्रविभावःसखीकौतुककलापः॥अनुभावःप्रियपरिहासः॥यथा॥चंद्रांशोचरमाद्रिंतुविनिमनोजिज्ञासितुंसु
भुवांन्यंचत्कौतुकयातयाविरचितेवंशीरवेराधया॥एषस्फूर्जतिकस्यनिःस्वनइतिक्रोधाद्रुजन्काननंराधांवीक्ष्यलताप्रता
नपिहितांस्मेरोहरिःपातुनः॥ त्वान्नदेतदन्यतमघटितसमुदायात्मककिलकिंचितस्योभयसंकीर्णत्वमित्याशयः॥तत्रप्रथमोद्दि
ष्टत्वाल्लीलांलक्षयति॥विभावउद्दीपकमनुभावस्तत्स्वरूपंतुदृश्यमेवमग्रेपिसर्वत्रबोध्यं॥चंद्रांशोतिग्मरोचिषिचरमाद्रिंतुविन्यस्ततयातेसति
सुभ्रुवांनायिकानांमनोंतःकरणवृत्तिंजिज्ञासितुंपरीक्षितुंन्यंचत्कौतुकयासंजातकौतुकयातयाप्रौढयाराधयावंशीरवेमुरलीनादेविरचितेकृतेसति राम॰
एषकस्यनिःस्वनःकेनकृतोमुरलीनादइतिक्रोधादमर्षणकाननंराधाधिष्ठितंव्रजनुगच्छन्लताप्रतानपिहितांवितनलताछन्नांराधांवीक्ष्यस्मेरोहस ६८

न्हरिर्नौस्यान्यातुरस्त्वित्यर्थः॥विला
संलक्षयति॥

कूजंतीशब्दायमानाकांचीमेखलायत्रदरमीषत्स्फुरंतीवलिस्त्रिवलिर्यत्रनटंतीचंचलाभ्रूवल्लीवल्लीसदृशीभ्रूर्यत्रवेल्लद्दुलाद्दपुःयोी
र्यत्रवलंतीउद्वेल्लंतीकुंडलकांतिःकर्णभूषणशोभायत्रसाचिवक्रंवलिताकृताग्रीवायत्रकर्मणियथाभवतितथावचनेनलपंत्यावच
तनोःसुंदर्याःप्रातरिति॥प्रातःकालेनर्तितानिवायुचलितानि॥एतेनक्रियाविशेषणनिर्दिष्टार्थविभ्रमतासिन्नावेदिता॥तानियानि
निपुंडरीकाणिसितोत्पलानितेनमुखप्रसादोव्यंग्यस्तेषांपरिषदःसभायाःपांडित्यस्यशोभायाःपाटच्चरीसमपहर्त्रीदृष्टिर्यप्रतियमुद्दिश्य

गमननयनवदनभ्रूप्रभृतीनांयःकश्चिदुत्पद्यतेविशेषःसविलासः॥अत्रविभावाः॥प्रियदर्शनस्मरणादयः॥अनुभावाः॥अभि
लाषवैदग्ध्यप्रकाशनादयः॥यथा॥कूजत्कांचिदरस्फुरद्वलिनटद्भ्रूवल्लिवेल्लद्वपुर्वल्गत्कुंडलकांतिसाचिवलितग्रीवंलपंत्या
वचः॥प्रातर्नर्तितपुंडरीकपरिषत्पांडित्यपाटच्चरीदृष्टिर्यंप्रतिजायतेनरतनोर्वक्रासशंकाधिकः॥कतिपयभूषान्यासोविच्छित्तिः
॥तत्रविभावाः॥सौकुमार्यप्रियसौभाग्यसौंदर्यगर्वक्रोधक्लेशादयः॥अनुभावागर्वमानक्लेशप्रकाशादयः॥यथा॥केयूरंनकरेपरे
नकटकंमौलौनमालापुनःकस्तूरीतिलकंतथापितनुतेसंसारसारांश्रियं॥सर्वाधिकयमलेखिभालफलकेयद्वेधसासुभ्रुवोत्रा
नीमःकिमुतत्रमन्मथमहीपालेनमुद्राकृता॥ वक्राजायतेसशंकाधिकोनायासेनस्वर्गफलाभिमुख्यादित्यर्थः॥विच्छित्तिर्यस्यपति॥

यद्यपिकेयूरंबाहुभूषणंकरेनकृतंपदेकटकंपुनरप्यर्थेनमौलौमस्तकेमालानतथापिकस्तूरीतिलकंललाटइत्यर्थात्संसारसारांसर्वाति
शायितांश्रियंशोभांतनुते॥तत्रोत्प्रेक्षते॥वेधसाब्रह्मणासुभ्रुवोस्याइत्यध्याहार्यंललाटफलकेयदितिक्रियाविशेषणंसर्वाधिकंललनाचूडाम
णित्वमलेखितत्रलेखेमन्मथमहीपालेनकामदेवेनेयमित्यध्याहार्यकस्तूरीतिलकरूपामुद्रायाथार्थ्यप्रतिपत्तयेकृताकिंमितिवयंजानीमोध्रुवंनि

र.त. केलिविधौ क्रीडाप्रारंभे पूर्वोपरीभूतानयववस्त्रवितावयविनीति यावत्॥ त्यक्ते वसिते पीतांबरस्य श्रीकृष्णस्यांशुकं परिधानीयं निजांशुकधिया स्व नौका
६९ परिधानीयबुद्ध्या परिधाय प्रावृत्य सख्यः शयनादंतःपुरपर्यंकादुत्थाय प्रातरुषसि बहिर्व्रजंत्या गच्छंत्याः पद्मायारुक्मिण्याः सकाशादादातुम
र्थात्तस्या यं गृहीतुं वसनांचलमर्थात्तत्रस्थितं तदीयं परिधानीयं चपलयन्निदं लदीयमिति दर्शयन् तावता नालोचयं त्यां तस्यां कोपं दृशा दर्शयन्ना
कस्मिक कोपनिदानमवेषणेनापीयमवबुध्येतेति मत्वा मिथ्यैवलोचनाकोचनाद्याविष्कुर्वन्नाचालुप्तगद्गदास्वरया कौतुकमाचरन्लोकोपहासा

वागंगभूषणानां स्थानविपर्यासो विभ्रमः॥ तत्र विभावाः॥ धनमदरागोत्कस्यादयः॥ अनुभावाः प्रियसख्याद्युपहासादयः॥ यथा॥
त्यक्ते केलिविधौ निजांशुकधिया पीतांबरस्यांशुकं पद्मायाः परिधाय सख्यशयनात्प्रातः प्रयांत्या बहिः॥ आदातुं वसनांचलं चपलय
न्कोपं दृशा दर्शयन्वाचा कौतुकमाचरन्स्मितसुधास्निग्धो हरिः पातु नः॥ श्रमाभिलाषगर्वस्मितहर्षभयक्रोधानां संकरः किलकिं
चितं॥ तदाहुः श्रमाभिलाषगर्वाणां स्मितहर्षभयक्रुधां॥ असकृत्संकरः प्राज्ञैर्विज्ञेयं किलकिंचितमिति॥ अत्र विभावाः॥ नवयौव
नोद्रेदचापल्यादयः॥ अनुभावाः कर्तव्यानिर्धारणादयः॥ यथा॥ कोदंडमारोहति चंडिमानं मधुव्रतः कांक्षति शोणिमानं॥ सदीभवन्

लोकास्त्वामेवमुपहसिष्यंतीति सूचयन्निति यावत्स्मितसुधास्निग्धो हास्यरससंभृतांतःकरणो हरिर्नोस्मान्यानु रक्ष त्वित्यर्थः॥ किलकिंचि
तं लक्षयति॥ श्रमो गात्रगौरवादिरभिलाष इच्छा गर्वस्मितहर्षभयक्रोधाः स्वस्वप्रकरणे लक्षिता मुख्या वा तेषामनुभावा गौणा एव वा तेषां
संकरोन्यतमसामानाधिकरण्यं॥ द्वयोरेव सामानाधिकरण्येपि न तथा व्यवहार इति वक्तुं तत्र संमतिमाह॥ अनुभाववैवस्योदाहरति रामः
। कोदंडं तत्त्वेनाध्यवसितं भ्रुकुटियुगलं चंडिमानं कौटिल्यमारोहति भजते॥ एतेन गर्वानुभाव उक्तः॥ मधुव्रतस्तत्त्वेनाध्यवसितं चक्षुः शो ६९

एतेनक्रोधानुभावउक्तः॥पद्मंतत्वेनाध्यवसितंवक्त्रंसुधांप्रसादंवर्षतिप्रकटयति॥एतेनहासानुभावउक्तः॥कीदृशंपद्मंवेपमानंप्रकंप
मानं॥एतेनभयानुभावउक्तः॥स्वर्णाचलस्तत्वेनाध्यवसितंकुचमंडलंस्विद्यति॥एतेनहर्षानुभावउक्तः॥अत्रकिंनिदानंकोहेतुरिति
कामयमानस्यतथाभूतांनायिकांप्रत्युक्तिः॥सतिसंभवेसर्वेषामपिसाकर्यंतथेतिवक्तुंमुख्यविवक्षयोदाहरणांतरमाह॥क्रोधावि
नाभावादागारतयाध्यवसितलोचनसमुद्भूताःसमुदयन्त्कालाविर्भूतोयःसंत्रासोभयंसएवशैलस्तेनार्दितामध्यरूढाव्रीडाभिर्हे
र्षैर्व्यंग्यव्यंजकयोरैक्यारोपात्परिमर्दिताःस्पृष्टाःस्मितसुधाधाराभिरुद्वर्तिताःस्नेहरसैरभिलाषैःस्नातामनोभवकलामालाभिःकामो

पद्मंसुधांवर्षतिवेपमानंस्वर्णाचलःस्विद्यतिकिंनिदानं॥यथावा॥क्रोधागारसमुत्थिताःसमुदयत्संत्राससशैलार्दिताव्रीडाभिः
परिमर्दिताःस्मितसुधाधाराभिरुद्वर्तिताः॥स्नाताःस्नेहरसैर्मनोभवकलामालाभिराभूषितायायासुमेयिशैलराजदुहि
तुःस्फीताःकटाक्षच्छटाः॥वार्तावैमुख्येसतिनिभृतभूयोदर्शनस्पृहामोट्टायितं॥अत्रविभावाःसपत्नीत्राससलज्जादयोनुभा ॥६६॥
वामनःप्रेमसंकेतनिवेदनादयः॥यथानस्नेहस्यकथारसंकथमपिश्रोतुंसमुत्कंठतेराधाकिंतुविकीर्णरत्नकपटादागत्यसौधा

द्दीपनचतुररचनापरंपराभिर्गर्वातिशयादाभूषिताःस्फीताःश्रमभराच्छैलराजदुहितुर्हिमालयसुतायाःपार्वत्याःकटाक्षच्छटाअपांगपत्त
नानिमयिपायासुःपत्यासुःपायासुरितिपाठेशुभावहानिभूयासुरितिकपटवटुवेषजिहासालरितरुद्रस्योक्तिः॥मोट्टायितंलक्षयति
।वागादिव्यापारविषयकद्वेषवत्वेसतीत्यर्थः॥निभृतेति॥इतरापरिचितेत्यर्थः॥दर्शनेति॥दृग्व्यापारइत्यर्थः॥राधास्नेहस्यप्रेम्णःकथा
रसंरस्यमानांकथांशब्दसाभाव्यात्तुतात्पर्यविरुद्धविशेष्यविशेषणभावावगमःसख्यादिभिर्निवेदितामित्यर्थात्कथमपिसखीदाक्षिण्ये

सत्यपिश्रोतुमाकर्णयितुंनसमुत्कंठतेनेकृति॥
एतेनहर्षोत्रावेदितः॥

र.त. ७०

विकीर्णस्य गलितस्य रत्नस्य मुद्रादिरवचितस्य कपटाद्याज्जातू॥एतेन संगुप्तिः सूचिता॥सौधातगृहात् बहिरेत्य नृत्यंतीनेत्रपुटी यत्र स्फुरंती नौका
कुचघटी यत्र स्वेदेनोल्लसंती लस्या स्वेदयुक्तेति यावद्दोस्तटी बाहुप्रांतो यत्र विशेषेण समंतादुल्लाती भ्रुकुटी यत्र स्वलंती कटिपटी यत्र
कर्मणि यथाभवातितथा कुस्रांतिके पुनः कुस्रसमीपे तु भ्राम्यति व्यावर्तते नटूत्यर्थः॥कुट्टमितं लक्षयति॥दुःखचेष्टा एतच्चेष्टया सदुःखाव
गमोस्तितोक्तेत्यर्थादांतरत्वमायाति॥इच्छाविशेषपरिचयायतु चेष्टारूपतेवाहत्योक्तेति ध्येयं॥एवमन्यत्रापि यथानुभवमूह्यं॥वीटिका
मोचनेसुतनोः पाणिरोद्धुं प्रचलति परं तु विराच्चिरकालमसौ रोद्धुं प्रवृत्तांगुलिर्निश्चला निरोधसमव्यापारशून्या पयोधरस्पर्शे भ्रूविक्षेपः सुत

नृत्यन्नेत्रपुटि स्फुरत्कुचघटि स्वेदोल्लसद्दोस्तटि व्यावल्गद्भ्रुकुटि स्खलत्कटि पुनः कुस्रांतिके भ्राम्यति॥सुखेदुःखचेष्टा कुट्टमितं॥
अत्र विभावा गोत्रस्य दशनकरजक्षतकुंतलाधरग्रहादयः॥अनुभावाः कपटकायसंकोचकपटसीत्कारादयः॥यथा॥रोद्धुं पाणिः
प्रचलति चिराद्गुलिर्निश्चलासौ भ्रूविक्षेपो भवति कुटिलो नेत्रमंतः प्रसन्नं॥गाढाश्लेषे भवति सुतनोरर्द्धमात्रो नकारः कंपो मूर्ध्नः
प्रसरति मुखं संमुखं न प्रयाति॥गर्वाभिमानसंभूतो विकारो नादरात्मा विब्बोकः॥अत्र विभावा यौवनमदधनमदकुलमदप्रियापराधादयः

नोरित्यत्राप्यनुषज्यते भ्रूव्यासः कुटिलो वक्रो भवति नेत्रमंतः प्रसन्नमांतरसुखाभिव्यंजकप्रसादयुक्तं गाढाश्लेषे सुतनोर्नकारोर्द्धमात्रो लघुश्च य
लो जयति विलसल्लो भवति स्वाभाव्यादुद्देतिनंतिकापूर्वकयत्नादित्याशयः॥जयतीति स्थाने भवतीति तु प्रक्रमानुरोधी पाठः॥तत्र नकारो भवति
परं लघुमात्र इति योजनात्॥आमंत्रणे मूर्ध्नः कंपः प्रसरति मुखं तु संमुखं न प्रयाति संमुखावलोकने तु नायको द्योतनपूर्वमेव प्रतिषेधउदितः स्या
द्युखत्वायां तु फलितेतद्व्योगे जाति स्वाभाव्यात्तापि प्रतिषेधः किंचित्करएवसंपद्यतइतीष्टसिद्धिरप्रत्यूहैवेत्यर्थः॥विब्बोकं लक्षयति॥अनादरात्मा

रामः ७०

कातरोभयचकितोदृङ्गिपातोयस्यैवंभूतः प्राणेश्वरः कृतांजलिर्बद्धकरपुटः सन्नस्याः पार्श्वपृष्ठतः समीपंननुसंमुखंवउपाजगाम एषा
पुनरेषानुसखीमुखेस्मितांकुंडलरत्नरेखांताटंकरवचितवैडूर्यादिकांतिंप्रेक्षितुंद्रष्टुंमाचकांक्षेषेत्यर्थः ॥ ललितंलक्षयति ॥ सकलांगानां
समीचीनतयाविन्यासः प्रसाधनमित्यर्थः ॥ धन्यासियाकथयसिप्रियसंगमेपिविस्रब्धचाटुकृशतानिरतांतरेषु ॥ नीवींप्रतिप्रणिहितेतु
करेप्रियेणसख्यः शपामियदिकिंचिदपिस्मरामीतिसकथापरासुसखीषुमध्येरतिकालिकंस्वप्रियालापंकथयंतींकांचित्प्रहसंत्याः कस्या
श्चिदुक्तौधन्यासीतिसोल्लुंठवाक्यात्प्रतीयमानस्यपरोपहासलक्षणस्यस्मितस्याधिक्यमाशंक्यनिराचष्टे ॥ आदिनाक्रियाविदग्धायाश्चेष्टावि

अनुभावाअवहित्थ्यदर्वचनदृःप्रेक्षणादयः ॥ यथा ॥ कृतांजलिः कातरदृङ्गिपातः प्राणेश्वरः पार्श्वमुपाजगाम ॥ सखीमु
खेकुंडलरत्नरेखामेषापुनः प्रेक्षितुमाचकांक्ष ॥ सकलांगसमीचीनविन्यासोललितं ॥ अत्रैवस्मितादयोंतर्भवंति ॥ तत्रवि
भावाः ॥ मनःप्रसादप्रियतमदृढानुरागधीरत्वादयः ॥ अनुभावाः प्रियवशीकरणलोकानुरागचमत्कारादयः ॥ यथा ॥ कलक्व
णितमेखलंचपलचारुनेत्रांचलंप्रसन्नमुखमंडलंश्रवणसंचरत्कुंडलं ॥ स्फुरत्पुलकबंधुरंलपितशोभमानाधरंविहस्यर
तिमंदिरंव्रजतिकस्यशांतोदरी ॥ शेषपरिग्रहः ॥ शांतोदरीकृशमध्याविहस्यतृणमिवस्त्रैणमवगणय्यकस्यमहामहिमस्तुकृतस्य
रतिमंदिरंक्रीडागृहंकूलकणितामधुरध्वनियुतामेखलाकटिभूषणंयत्रचपलंचंचलमतएवचारुरमणीयंनेत्रांचलंपक्ष्मयत्रप्रसन्नमंतं
तरसुखानुभावभूतप्रसादसहितंमुखमंडलंमंडलाकारंमुखंयत्रश्रवणयोः संचरतीकुंडलेताटंकेयत्रस्फुरंतः प्रकाशमानाः पुलकास्तदाघ्याः
परमसूक्ष्माअपिविकारायस्यतादृशंबंधुरंनिम्नोन्नतंनाभिस्तनप्रधानमवयवचक्रंयत्रलपितेनभाषणेनशोभमानोधरोयत्रकर्मणियथाभ

अभिलाषस्यापरिपूर्त्तिर्विषयासंस्पर्शस्तथा चाभिलाषफलोपधायकसामग्रीकालीनस्वप्रयत्नसंघटिततादृशसामग्रीविघटनं विहतमि
तिफलितं॥ तत्रेदं बोध्यं॥ तादृशविघटनरूपफलोपधायकप्रयत्नो विहृतं विघटनं त्वनुभाव इति॥ व्याजात्परकीयस्य लज्जायाः स्व
कीयस्याभिलषितस्य विघटनमिति विशेषमभिप्रेत्याह॥ चंद्रचूडे शिवे तिलकं पत्ररचनां कपोले गल्लयोर्विधातुं कर्तुमभिलषति वांछति
सत्युदयन्नांतःकोपस्तद्धत्या॥ एतेन विलंबासहिष्णोरकांडकोपः कंपसहायकमाचरतीति दर्शितं॥ फणिपतेर्वलयीकृतमणिधरस्य
द्भयकूटं मिथ्याभूतं भयं तस्मादंगं हस्तादि उत्कंपयंत्यो त्कृष्टकंपशालिन्या चरंत्या भवान्या प्रचलकंपभाग्यद्भसनमंचलं तत्संभूतैर्वातैः केलिदी

प्रियसंनिधावप्यभिलाषापरिपूर्त्तिर्विहृतं॥ व्याजलज्जादयो विभावाः॥ अनुभावा अन्यथाचेष्टितान्यथाव्यवहारादयः॥ व्याजाद्य
था॥ अभिलषति कपोले चंद्रचूडे विधातुं तिलकमुदयदंतःकोपभाजा भवान्या॥ फणिपतिभयकूटादंगमुत्कंपयंत्या प्रचल
वसनवातैर्विघ्निताः केलिदीपाः॥ लज्जातो यथा॥ आनंदभाजो यदुनंदनस्य करावरोधं नकरेण कुर्याः॥ सखीं लपंतीमिति सं
जघान चकोरनेत्रा चुलुकोदकेन॥ पूर्णोरन्योन्यमुदितानां पंचेंद्रियाणां संबंधाभावः॥

पाः क्रीडार्थं स्थापिता दीपा विघ्निता निर्वापिता इ
त्यर्थः॥ चकोरनेत्रा कोपकषायिताक्षीत्यर्थः शक्तिमूलध्वनेरध्वा॥ सखीं सहचरीं चुलुकोदकेन मुखसंमार्जनार्थमुपात्तेन संजघान निषिषेचेत्य
र्थः॥ कथंभूतां सखीमानंदभाज उत्कंठितस्य यदुनंदनस्य श्रीकृष्णस्य करावरोधं कंचुलिकादिनिर्मोकप्रवृत्तपाणिप्रतिबंधं करेण स्वीयेन
न कुर्या इत्येवंरूपं लपंतीं शिक्षयंतीमित्यर्थः॥ अत्र प्रियकथाश्रुश्रूषत्येव कयाचिल्लज्जापारवश्याच्चुलुकोदकनिषेकेण प्रियकथारूपस्वेष्टस्ये
व विघटनं कृतमिति पूर्वस्माद्विशेषः॥ सपरिकरं संभोगं लक्षयित्वा विप्रलंभं लक्षयति॥ अन्योन्यमिति प्रमोदे संबंधाभावे चान्वेति॥ मुदितानां

आंतररतिभावव्यभिचारिणोहर्षादेरनुभावैःसंभृतानामित्यर्थः॥संबंधाभावइति॥रतिंविनाताहृशाभावोतिप्रसक्तः करुणइतिमुदितेत्यु
क्तं॥संभोगव्यावृत्तयेसंबंधाभावइति॥पंचेतितुरतिपरिपोषाभिप्रायं॥तथाचवियोगकालावच्छिन्नापरिपूर्णारतिर्विप्रलंभइतिफलितं॥
परिपोषाभावेतुशृंगाररससामान्यलक्षणाभावान्नविप्रलंभोपीतिमंतव्यं॥ननुदोषदुष्टेंद्रियसंबंधकालेपिपरस्परंसाक्षात्काराभावेनविप्रयु
क्तत्वसत्वमतसिद्धं तत्संपत्तयेचफलोपहितत्वंसंबंधविशेषणमावश्यकं॥ततोवरंस्वविषयसिद्ध्यनुपहितत्वमेवपरिपूर्णरतिवि
शेषणमित्यभिप्रेत्यलक्षणांतरमाह॥इच्छाविषयासंबंधइच्छयेवार्थाल्लभ्यतइतिभवदुक्तमेवलक्षणपर्यवसितमितिभावः॥उल्ल

अभीष्टाप्राप्तिर्वाविप्रलंभः॥नचमानात्मकेविप्रलंभेव्याप्तिरितिवाच्यं॥मुदितपंचेंद्रियसंबंधाभावरूपस्यविशिष्टाभावस्यत
त्रापिसत्वात्॥तदानींयूनोरिंद्रियाणांमुदितत्वाभावात्॥ननुयाप्रियमभिसरतिसाविप्रयुक्ताभवेदितिचेत्॥सत्यं॥साविप्रयु
क्तैव॥अचिरदर्शनप्रत्याशानुवृत्तप्रमोदेनविरहधर्मस्याश्रुपातादेरसंभवइति॥ नोमुदितपदव्यावृत्तिंदर्शयितुंशंकते॥समाधत्ते

नन्विंद्रियसंबंधरूपप्रतियोगिमतिकथंतदभावोऽभावप्रतियोगिनोः परस्परंविरोधादित्याशंक्याह॥तथाचनकेवलंप्रतियोगिनासहाभाव
स्यविरोधः॥किंतुप्रतियोगितावच्छेदकावच्छिन्नेनैवेत्याशयः॥यत्तुविशेष्यस्याप्रतियोगित्वमुत्पादनायविशेष्यवतिविशिष्टाभावस्यविशे
षणाभावस्वरूपताभिप्रायवर्णनं॥तत्तुच्छं॥मुदितत्वाभावस्यविशिष्टाभावेहेतूपदर्शनविरोधात्॥नन्वभिसारिकानविप्रयुक्ताविप्रलंभकार्य
स्याश्रुपातादेरभावात्तथाचतत्रातिव्याप्तिरित्याशंकते॥समाधत्ते॥एवकारेणमुदितत्वमात्रोपादानेतत्रातिव्याप्तिरिंद्रियसंबंधाभावोपादा
ने॥अस्तिह्यस्यांचिंतासंगइतितद्वारणमितिमतमयुक्तमसंभवापत्तेरितिसूचितं॥नन्वेवंकृतोनाश्रुपातादिस्तस्याइत्यतआह॥विशेषानुप

र.न विशेषानुपलंभेपिकारणवैचित्र्यमात्रेणविभिन्नभेदलेशोऽन्येपिबहवोभेदाःसंभवंतीतिवक्तुमुपक्रमते॥देशांतरगमनंनस्वरूपसदेववि नौका
७२ प्रलंभहेतुःकिंतुतज्ज्ञानसामान्यंतयावद्देशांतरगमनाभावेपितज्ज्ञानहेतुकंविप्रलंभमुदाहरन्ति॥प्रियतमेनायकेप्रस्थानायप्रस्था
नंकर्तुंकृतोद्यमेआरब्धोद्योगेसतिवामभ्रुवोनायिकायाःदोःकंकणेन॥यद्यपिकंकणंकरभूषणमितिकोशाद्दोःपदानर्थक्यंप्रतिभाति
तथापिदृष्यविशेषणवाचकपदसमभिव्याहारेविशिष्टवाचकंपदंविशेष्यमात्रमभिधत्तइतिकाव्यविदांसमयात्कंकणपदंभूषणमा
त्रपरंद्रष्टव्यं॥च्युतंगलितंधैर्येणस्खलितंत्वरापसरणान्मदेनगलितंनेत्रांभसानिःसृतंस्थानोपश्नवशांकपाथियासुनागंतुमिच्छताजीवे

सचविप्रलंभःपंचधा॥देशांतरगमनात्॥गुरुनिदेशात्॥अभिलाषात्॥ईर्ष्यायाः॥शापाच्चेति॥समयाहेवाहिड्वरादिस्याद्यो
षन्नेयाः॥देशांतरगमनाद्यथा॥प्रस्थानायकृतोद्यमेप्रियतमेदोःकंकणेनच्युतंधैर्येणस्खलितंमदेनगलितंनेत्रांभसानिः
सृतं॥जीवेनापियियासुनाशिवशिवप्रारंभिवामभ्रुवःकंपांदोलितकिंकिणीकलरवव्याजेनवैण्यस्मृतिः॥यथावातातच
रणानां॥वीणामंकेकथमपिसखीप्रार्थनाभिर्निधायस्वैरंस्वैरंसरसिजदृशागातुमारब्धमेव॥

नापिकंपेत्यादिकंपेनासमंतादोलि
तास्चालिताश्चकिंकिण्यःक्षुद्रघंटिकास्तासांयःकलरवोव्यक्तमधुरध्वनिस्तद्व्याजेनवैण्यस्मृतिःप्रस्थानेवैण्यस्मृतेर्मांगलिकत्वात्काकतात्
यस्मात्॥वेण्यंदृशुंहेहयमज्ञेनंचशाकुंतलेयंभरतंनलंच॥रामंचयोवैस्मरतिप्रयाणेतस्यार्थसिद्धिःपुनरागमश्चेति॥शिवशिवेतिनिर्वेदे॥प्रारंभि
सार्थदासिष्याद्दंतुमावश्यकत्वेपिपुनरागमनेच्छयैवंविधमंगलमाचीर्णमित्यर्थः॥स्वरूपसद्देशांतरगमनहेतुकमपिविप्रलंभमुदाहरति॥स रामः
रसिजदृशाजलाविनाभूतलोचनयाकयाचिन्नायिकयासखीप्रार्थनाभिःप्रियसखीविज्ञापनाभिःकथमपिबलात्कारेणवीणामंकेनिधायस्वैरंस्वैर ७२

मभिनिविष्टस्याकंठेन गातुमारब्धमेवमूर्छनामूर्छा किमप्यत्यंतं विरहेणाक्षीणात एव दीनात्तुकंप्यांगवल्ली यस्यास्तामेनामेव तंत्रीबुध्या वीणाभ्र
मेण बहुशोधिकं स्पृशति विप्रलंभोद्दीपनादेतच्चित्रं मूर्छनापदार्थस्य सशब्दधर्मस्य वीणायामेवाभिव्यक्तेरुचितत्वादित्यर्थः॥ हे नाथ गुरोः पित्रादेः
त्या निर्यातोसि परं त्वमी क्रूराग्रहाद्दुष्टग्रहकार्यकारिणः कथं त्वया न विचारिताः कमनर्थमुत्पादयिष्यंतीति गणकं प्रति दृष्टाः॥ अमी के तानाह॥
चूततरुरास्नो भास्वान्नवपल्लवैर्दीप्तिमान्सूर्यश्च॥ मनसिजः कामो गुरुर्महान्बृहस्पतिश्च॥ कोप्यनिर्वचनीयप्रभाव एष पुरोवर्ती भृंगस्तमआं
ध्वसंपादकत्वाद्राहुश्च॥ गंधवहो वायुर्मंद एतेनोद्दीपकता वेदिता शनिश्च॥ मलयजश्चंदनं सितो जात्या शुद्धः शुक्रश्च॥ माधवो वसंतो दोषाणां

तंत्रीबुद्ध्या किमपि विरहक्षीणदीनांगवल्लीमेनामेव स्पृशति बहुशो मूर्छनाचित्रमेतत्॥ गुरुनिदेशाद्यथा॥ भास्वांश्चूततरुर्गु
रुर्मनसिजः कोप्येष भृंगस्तमो मंदो गंधवहः सितो मलयजो दोषाकरो माधवः॥ अंगारो नवपल्लवः परभृतो विज्ञो गुरोराज्ञ
यानिर्यातोसि विचारिताः कथममी क्रूरास्त्वया न ग्रहाः॥ अभिलाषाद्यथा॥ आगाराभिमुखं मुखं रचयतो वक्रीकृतग्रीवयो
र्यस्त्वं चालमजानतोः क्वचिदपि व्याजासु नस्तिष्ठतोः॥

परपीडनादिरूपाणामाकरः स्थानं चंद्रश्च॥ नवपल्लवोंगारो दाहकत्वान्मंगल
श्च॥ परभृतः कोकिलो विज्ञो विशेषाभिज्ञः स्वरूपतोरुंतुदस्य कुह्विति भणितस्य विरहिजनसंतापकारि चंद्रावसानपर्यवसायितया मिलि
तस्यामावास्यादिरूपार्थस्य प्रतिपादनमुखेनेष्टचिंतकत्वस्य स्वस्मिन्प्रख्यापनाद्बुधश्चेत्यर्थः॥ क्वचिदेव देवायतनादौ प्रवृत्तसचसूराग
योः संमर्दवशादचिरं विश्लिष्टयोर्द्वारभेदेन बहिर्निःसृतयोरन्योन्यमार्गावलोकनासक्तयोः कयोश्चिन्नायकयोर्मनोरथवर्णनमिदं॥ अ
ग्रे गमनाशंकया पुरो गच्छतोरप्यंतरादेवायतन एव समुदयत्संभावनयागाराभिमुखं मुखं वदनं रचयतोरत एव वक्रीकृतग्रीवयोस्तेनैव

र॰त॰ अस्तं व्यस्तं तया पिधेयपिधानास्समंचोलमंगावरणवस्त्रमजानतोः क्वचिदस्थानेपि व्याजात्पुनर्मिषेणेव तिष्ठतोर्मार्गं गंतव्यमध्वानं वि टीका
७३ स्मरतोः क्वचित्क्वचिदपि यत्र कुत्रापि विषये त्यक्ताक्षरं लुप्तवर्णं जल्पतोरावयोर्यत्सा चिवक्रं प्रेक्षितं मध्येमार्गं दैवसंघटितं प्रेमभरपूरितं च
सुषानिभृतपरस्परावेक्षणमभवत्तद्वयः पुनरपि वयमाशास्महे आवामाशास्वहे इत्यर्थः॥ यथाहं त्वयि तथा त्वं मयीति प्रकाशस्त्वत्किं विलंब
मिति द्वयोरप्याशयस्य प्रतिपादयितुं युक्तत्वात् अस्मदो द्वयोश्चेत्यनेन हि त्वविवक्षायामप्यस्मदो बहुवचनानुशासनात्॥ यद्यप्येकत्व
विवक्षासाधारणमेव तदनुशासनं तथापि रसाभासापत्त्यानेकत्वमपि प्रकृते विवक्षामर्हतीति ध्येयं॥ अभिनवं च सुरागस्य जनयात्राप्रसंगस्य
वसमुत्पत्तेर्वर्णनस्य कविकुलक्षुण्णत्वादन्यादृशव्याख्यानेत्वागाराभिमुखं मुखं रचयतोरित्यस्य क्वचिदपि व्याजात्पुनस्तिष्ठतोरित्यस्य च सामंज

मार्गं विस्मरतोः क्वचित्क्वचिदपि त्यक्ताक्षरं जल्पतोः सा विप्रेक्षितमावयोर्यदभवद्द्वयस्तदाशास्महे॥ ईर्ष्यातो यथा॥ प्राणेशस्य
प्रभवति मनः प्रेमहेमप्रसूनं चेतश्चूतं दृगपिकमलं जीवनं बंधुजीवं॥ आशासूत्रे ग्रथितमखिलं वेधसा तस्य भंगे स्यादेतेषाम
पि निपतनं चंडि मानं विमुंच॥ शापाद्येषा॥ अन्यत्र यदि निर्गंतुमिच्छा निर्गच्छ दूरतः॥

स्वाभावादिति॥ हे चंडि अत्यंतकोपने मानमाग्रहं
विमुंचेति तस्या उक्तिर्वेधसा ब्रह्मणाखिलं सर्वमेतदाशासूत्रे प्रभवति समर्थे ग्रथितं प्रोतमस्याशानियतसत्ताकं भवतीति भावः॥ तदेवा
ह तस्येति॥ तस्याशासूत्रस्य भंगे नाशे सत्येतेषामपि निपतनं निपातः स्यात्॥ एतत्किं तदाह॥ प्राणेशस्येति॥ पार्यंतिकप्रेमालंबनस्य मनः प्रे
मात्मकं हेहाहेमप्रसूनं स्वर्णपुष्पमत्यंतसंरक्षणीयत्वात् चेतोंतःकरणं चूतमाम्रपुष्पं प्रियागंधानेकविधमनोरथशालित्वात्॥ दृगपिकमलं पा रामः
थःपूरनिमग्नत्वाज्जीवनं बंधुजीवमस्थिरप्रसादत्वादित्यर्थः॥ निर्गंतुं पुनर्बहिर्यातुं जीवितुमिति यावत्॥ इच्छा॥ यदीति॥ अस्ति तर्हीति शेषः॥ ७३

दूरतोनायिकामदृष्ट्वैवनिर्गच्छपरावर्तस्व॥अन्यत्र॥पक्षांतरेप्रियांप्रत्यभिसरणइतियावत्॥प्रियेति॥प्रियायायोविरहस्त्वदीयविश्लेष
स्तेनजातोयस्तापःप्रज्वलनंतेन॥अस्माकंप्रतापनमात्रस्समोपितस्यास्तापस्त्वन्मुखावलोकनमात्रेधःप्रवर्द्धितस्त्वंप्रदग्धुस्समतइत्या
शयः॥शापदग्धःशापेनेवदग्धोभस्मसाद्भविष्यसितथासंभाव्यसेप्रियासंभागेयथामहापुरुषशापेनभस्मीभूतमात्मानंसंभावयसितथा
हमपिप्रियानैकट्यमात्रेणशापमूलत्वदीयविरहानलेनतथाभूतंत्वांसंभावयामीत्यर्थः॥एतेनयद्यपिविरहपदबोधितेप्रकृतनायिका
विरहेशापहेतुकत्वाभावेपिशापसंभावनासंभावितेन्यनायिकाविरहेतथात्वमविकलमितिभवत्येवोदाहरणं॥नथाप्यन्यत्रेत्यादिनावि
भावताव[illegible]दकरूपेणविभावस्याप्रतिपादनेनवियोगस्यभविष्यसीत्यनेनसंभाव्यमानहेतुकत्वप्रतिपादनेनचबुद्ध्यनारोहादतएवचास्या

प्रियाविरहतापेनशापदग्धोभविष्यसि॥समयाद्यथा॥विश्लेषजीवनव्रीडापीडाविधुरमानसा॥तस्यैप्रातःप्रियंप्रेक्ष्यचक्रीव
क्रीकृतानना॥

नुभावादेराक्षेपस्याप्यसंभवात्स्वानुदाहरणत्वमाशंकमानाःपरास्ताः॥वियोगेपिजीवनसंभूतव्रीडाजनितपीडयावि
धुरमधीरंमानसंयस्याः साविश्लेषजीवनाभ्यांव्रीडापीडाभ्यामितिव्याख्यानंतुविश्लेषपीडायावक्रीकृतेत्यस्यानन्वयगुणत्वादुपेक्ष्यं॥त्व
याविनानजीवामीतिप्रतिज्ञातवतीकाचित्कामिनीप्रियंविधावभ्युदितेसमागमिष्यामीतिदत्तसंकेतं॥प्रातः॥चंद्रोदयएवद्रुतधावित
या॥त्वामिविधावभ्युदितेपुनरेष्यामीतियदुदितंभवता॥जानास्युदंतमात्रनेदंतत्वंनजानानीत्यादिवाक्येनपरावर्तितंप्रातरागतं॥एतेन
संकेतवैफल्यमुक्तं॥प्रेक्ष्यविफलितसंकेतंमत्वाचक्रीवक्रीकृताननेत्येकंपदं॥चक्रीवचक्रवाकीव॥एतेनयथाचक्रवाकीकपंजरेबलात्स
घटितंप्रियंप्रातःप्रेक्ष्यमुखमात्रंवक्रीकृत्यतिष्ठतितथेत्यर्थःसूचितः॥वक्रीकृतमवक्रंवक्रंसंपद्यतेतथाकृतमाननंयस्यातथाभूतातस्यै॥

एतेनसमयाकालविशेषादिस्यर्थेपितावक्रवाकीवृत्तांताभिप्रायेणोदाहरणंमन्यमानानांतिर्यग्विरहवर्णनानौचित्यात्मामनस्तापोवि 
सायतइतिमंतव्यं॥जीवनेसतिविश्लेषोविश्लेषेचसतिजीवनमप्यनयोर्द्वयोर्यूनांमध्येहमेवनत्वन्यन्निदर्शनमुदाहरणमितिरामसा
क्तिः॥यूनांदार्ष्टांतिकभूतानामितित्वन्युत्पन्नप्रलापितमनादेयं॥तथासतिबहुवचनप्रतिपादितबहुत्वान्वययोग्यानांबहूनांविवक्षि
तत्वात्पूर्वपूर्वेषामुत्तरोत्तरोदाहरणत्वप्रतीत्याहमेवेत्यवधारणासंगतेः॥इतरासाधारण्यप्रतिपिपादयिषाविरोधाद्व्यस्तः सूर्यश्चंद्रः शी
तइतिवदपुष्टार्थत्वापत्तेश्च॥लंकानगरेकेलीगृहेवागृहैकदेशेवामणिमंदिरेवागृहस्यसर्वभागेवाप्रज्वालितोहुताशोग्निःशशामकि

दैवाद्युथा॥जीवनेसतिविश्लेषोविश्लेषेसतिजीवनं॥द्वयोरप्यनयोर्यूनामहमेवनिदर्शनं॥विद्वराद्यथा॥केलीगृहेवामणि
मंदिरेवाशशामलंकानगरेहुताशः॥इतस्ततःप्रस्थितयोर्नयूनोर्वियोगजन्माविरामवन्हिः॥इतिरसनिरूपणेषष्ठस्तरंगः॥
हास्यस्यपरिपोषोहास्यः॥वर्णोस्यशुक्लः॥दैवतंप्रमथः॥सचद्विविधः॥स्वनिष्ठःपरनिष्ठश्चेति॥ यत्ताचित्कालेनशांतोनभूवेतस्ततो

यथानिर्गमंप्रस्थितयोःपलायितयोर्यूनोःपुमान्स्त्रियेत्येकशेषः॥वियोगजन्माविरहोद्दीपितोवन्हिर्वन्हिस्तुनविरामभयातिपातेनविराद
प्यपरावर्तनादितिभावः॥ इतिश्रीजड्युपनामकगंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांषष्ठस्तरंगः॥ ॥हास्यत्वस्यपति
॥अस्यवर्णंदर्शयति॥दैवतंदर्शयति॥एवमग्रेपि॥तंविभजते॥स्वनिष्ठइति॥स्वसमानाधिकरणविभावज्ञानमात्रापेक्षइत्यर्थः॥व्यधिकरण
स्यापिविभावस्यज्ञानंसमानाधिकरणमेवेतिनकोपिदोषः॥परनिष्ठेतिप्रसंगवारणायमात्रेति॥अतएवनशृंगारद्वैविध्यसंभवइतिबोध्यं॥तदुक्तं 
॥आत्मस्थोद्रष्टृरूपस्त्वन्योविभावेक्षणमात्रइति॥परनिष्ठइति॥अनुभावपर्यंतज्ञानद्वारास्वव्यधिकरणविभावज्ञानसापेक्षस्वसमानाधिकरण 

स्वनिष्ठेतिप्रसंगवारणायसापेक्षांतं॥ अतएवनरौद्रद्वैविध्यसंभवइतिबोध्यं॥ तदुक्तं॥ हसंतमपरंदृष्ट्वाविभावंचोपजायते॥ योसौहास्य
रसस्तज्ज्ञैः परस्थः परिकीर्तितइति॥ तावपिस्वनिष्ठपरनिष्ठावपि॥ इतीति॥ मिलित्वेतिशेषः॥ एवमग्रेपि॥ उत्तमानांस्वनिष्ठः परनिष्ठश्च
हास्यः स्मितहसितभेदेनद्विविधः॥ एवंमध्यमानांस्वनिष्ठः परनिष्ठश्चहास्योविहसितोपहसितभेदेनद्विविधः॥ एवमधमानांस्वनिष्ठः पर
निष्ठश्चहास्योपहसितातिहसितभेदेनद्विविधइतिद्वादशविधोहास्यइतिवक्तुमुपक्रमते॥ अत्रद्वावप्यपिशब्दौपरस्परनिरपेक्षत्वलक्षणं

तावप्युत्तममध्यमाधमभेदात्त्रिधेतिषड्विधः॥ स्वनिष्ठोपिषड्विधः परनिष्ठोपिषड्विधइतिद्वादशविधोहास्यः॥ तथाहि॥ उत्त
मानांस्वनिष्ठपरनिष्ठेचस्मितहसिते॥ मध्यमानांस्वनिष्ठपरनिष्ठेचविहसितोपहसिते॥ अधमानांस्वनिष्ठपरनिष्ठेचाप
हसितातिहसिते॥ उत्तमानामीषद्विकसितकपोलमव्यक्तदशनमपांगसुष्ठुवीक्षणंस्मितं॥ उत्फुल्लकपोलंकिंचिल्लक्षित
दशनंहसितं॥ मध्यमानांसमयोचितमुत्तमस्वनमाकुंचितमुखमाविर्भूतवदनरागंविहसितं॥ उत्फुल्लनासापुटंकुटिलवी
क्षितंकुंचितग्रीवंस्फुटस्वनमुपहसितं॥ अधमानामुद्धतमुद्यदश्रुकंपितमौलिस्फुटतरस्वनमपहसितं॥ प्राधान्यंसूचयतस्तदे

वोपपादयति॥ स्मितंलक्षयति॥ तदुक्तं॥ ईषत्फुल्लकपोलाभ्यांकटाक्षैरप्यनुल्बणैः॥ अदृश्यदशनोहास्योमधुरः स्मितमुच्यतइति॥ हसितं
लक्षयति॥ तदुक्तं॥ वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः॥ किंचिल्लक्षितदंतश्चहास्योहसितमिष्यतइति॥ विहसितंलक्षयति॥ तदुक्तं॥
सशब्दंमधुरंकालगतंवदनरागकृत्॥ आकुंचिताक्षिवदनंविदुर्विहसितंबुधाइति॥ उपहसितंलक्षयति॥ तदुक्तं॥ निकुंचितांसशीर्षश्चजिह्मदृष्टि
विलोकनः॥ उत्फुल्लनासिकोहास्योनाम्नोपहसितंमतइति॥ अपहसितंलक्षयति॥ तदुक्तं॥ अस्थानजः साश्रुदृष्टिराकंपस्कंधमूर्धजः॥ शार्ङ्गदेवेनगदि

तोपहसितः॥ अतिहसितंलक्षयति॥

तदुक्तं॥ स्थूलकर्णकुटुंब्यानो वाप्यपूरप्लुते क्षणः॥ करोपगूढपार्श्वस्य महास्योतिहसितं मतम् इति॥ पद्मभूर्ब्रह्मा लेखनी मितइत उभयोरपि पार्श्वयो
र्विलोकयन् कुत्र कुत्र न जगाम किं किं न ददर्श श्रवणसीम्नि लंभितामवतंसीकृतां तां पुनः प्राप्य सन्नतमुखं सन्नतं कपोलविकासप्रतिबंधकचेष्टाव
दाननं यस्य तथा॥ सन्नतमुख इति प्रथमांतपाठे त्वध्याहृतपूर्वक्रियाकर्तृविशेषणसमर्पकमेतत् स्मितं दधावित्यर्थः॥ अत्र व्यंजकतावच्छेदक
वैजात्यात् द्वैरूप्यपि स्मितादिपदानि न व्यंग्यतावच्छेदकानिव मंति॥ तथा तथाविधलेखनी ब्रह्मगतहास्यालंबनं न चासौ स्वाश्रय इत्युदाहर
णसंगतिः॥ सोयं वै सर्वं व्योमगतं श्मश्रु द्वारे निभिंद्यैनां गगनतलदृश्यं रदाग्रं व्योमांकुरमुदीक्ष्य तथा संभाव्य विस्मो यद्वास्यमुग्रं द्युस प्रतिब

अत्युद्धतं बहलाश्रुस्फुटतमस्वनमाश्लिष्टपार्श्वं जनमार्भ्यकरतालमतिहसितं॥ स्वनिष्ठं स्मितं यथा॥ लेखनीमितइतो विलो
कयन् कुत्र कुत्र न जगाम पद्मभूः॥ तां पुनः श्रवणसीम्नि लंभितां प्राप्य सन्नतमुखः स्मितं दधौ॥ स्वनिष्ठं हसितं यथा॥ व्योमांकुरं
व्योमगतं रदाग्रमुग्रद्युति स्मीयमुदीक्ष्य विस्मोः॥ यदा सहास्यं किमु तस्य योधावद्यापि फेनस्तवकायमानं॥ परनिष्ठं स्मितं हसितं च
यथा॥ हरवृषभमुखे सखेलमायोजयति सुवर्णसवर्णकांतिपर्णं॥ दृशि भुजगपतेः शिशुः षडास्यः कलयति कज्जलमंतिके भवा

दृदृश्रानव्यक्तयास तस्य योधौ क्षीरार्णवे द्यापीदानीमपि फेनस्तवकायमानं पुंजीभूतफेनरूपतया परिदृश्यमानं किम्वित्यर्थः॥ एकोक्तैव परनिष्ठ
मेतद्वैद्वह्यमुदाहरति॥ षडास्यः शिशुः स्वामिकार्तिको हरवृषभमुखे नंद्यास्ये सुवर्णेत्यादि सुवर्णेन सवर्णा समानवर्णा कांतिर्यस्य तत्सपर्णं भवा
न्यां अंतिके समक्षं सखेलं सकौतुकं यथा स्यात्तथा योजयत्युपनयति॥ भुजगपतेः शेषस्य दृशि कज्जलं कलयत्यत्रापि सखेलमित्यनुषज्जते॥ ते
न लक्षणलक्षितता वगमः॥ इत्त इत्यर्थः॥ अत्र पर्णस्यापारेण हसंतं षडास्यं दृष्ट्वा भवान्याः स्मितमभूद् जनन्यापारेण हसंतं तं दृष्ट्वा तस्याः स्मि

नौका

[illegible]ष्ठादुदाहरणेनैव स्वनिष्ठ उदाहृतो भवति स्वाश्रयालंबनत्वस्य तल्लक्षणत्वादित्याशयेन तमेव भेदमुदाहरति॥ तरुण्यो निशासु तैलस्य
धियागृहीतैर्मषीजलैर्लिप्तमुखारविंदं गोपं प्रभाते स्खलदश्रुनीरं निष्पतद्बाष्पजलमधीरनादं प्रव्यक्तकंठध्वनि यथा भवति तथा जहसुर्ह
सितवत्य इत्यर्थः॥ अत्र बहुवचनात्परनिष्ठता॥ मयापआग्रहआरअद् इति तात्पर्यकं पद्यं योनिरोध इति पदघटितं वाक्यं पठन्बुधो योनेरोध इ
ति जुगुप्सितार्थप्रतिपादकं मत्वा शश्वदित्यादि निरंतरश्वासभरोत्फुल्लनासापुटेन तटस्थेन तेनाप्युपहस्यत इत्यर्थः॥ वारवधूर्वेश्या रतो
त्सवैकेलिवेलायां कंठावलग्नं वल्लभयज्ञसूत्रमुपवीतं॥ अत्र चालंबनोद्दीपनाश्रयाणां त्रयाणामपि प्रतीतिरिति विशेषं ध्वनयितुं कि

परनिष्ठं विहसितं यथा॥ निशासु तैलस्य धिया गृहीतैर्मषीजलैर्लिप्तमुखारविंदं॥ गोपं प्रभाते स्खलदश्रुनीरमधीरनादं जह
सुस्तरुण्यः॥ परनिष्ठमुपहसितं यथा॥ योनिरोधो मयारअद् इति पद्यं पठन्बुधः॥ शश्वदुत्फुल्लनासेन तटस्थेनोपहस्यते॥ पर
निष्ठमपहसितं यथा॥ रतोत्सवे वल्लभयज्ञसूत्रं कंठावलग्नं परिमोचयंती॥ द्विजांगना दीर्घतरं श्वसंती तारस्वनं वारवधूर्जहा
स॥ परनिष्ठमतिहसितं यथा॥ चोरः कामरिपोर्गृहं निशि गतः शूलं कपालं हरन्बीजं धूर्तफलस्य तंडुलधिया नीत्वा पुनर्भुक्तवान्॥
यावत्तान्प्रचलन्स्खलन्परिपतन्मुह्यन्विघूर्णन्हसन्नट्टाट्टध्वनिमुक्तमालिकुसुमं सर्वैश्चयाहस्यते॥ यां विशिनष्टि॥ दीर्घतरमिति॥ श्व

संतीं हसंतीमिति यावत्परिमोचयंतीं कांचिद्द्विजांगनां ब्राह्मणवधूं दृष्ट्वेति शेषः तारस्वनमुच्चैर्घोषं यथा तथा जहास हसति स्मेत्यर्थः॥ सर्वैश्च या
चौरो निशि कामरिपोः शिवस्य गृहं गतः शूलं कपालं च हरन्धूर्तफलस्य धत्तूरस्य बीजं तंडुलधिया नीत्वा पुनस्तदर्थं भुक्तवान्॥ अत एव यावत्तान्प्र
दोलितः सन्प्रचलन्धावन्स्खलन्नुद्धचरणः सन्परिपतन्लुठन्मुह्यन्निस्मृतारंभः सन्विघूर्णन्विवित्तो भवन्हसन्निर्गलं बहास्यं कुर्वन्नट्टाट्टध्वनिनि

र.त. मुक्तकुंठंमुक्तमौलिकुसुमंनिपतच्छिरोगुंफितपुष्पंच यथास्यात्तथाहस्यतेहासास्मदीक्रियत इत्यर्थः॥ अत्रत्वेकत्वविवक्षया प्राग्वदेवद्रष्टव्य नौका
७६ रुषासेपादुत्तरत्वदेववापरनिष्ठत्वमवगंतव्यं॥ करुणंलक्षयति॥ परिपोषोभग्नावरणविद्वेशिष्टंतत्रविनिगमनाविरहाच्छोकावच्छिन्न
भग्नावरणविदोपिकरुणत्वेशोकासाधारणकार्यीभूतसर्वेंद्रियक्षोभस्याप्यवच्छेदकत्वविनिगमकाभावेनानीयमानमनिवार्यमित्यनंतःक
रणवृत्तेरपितथात्वमभिधत्ते॥ अतएवक्लेशाद्धाहाकारोत्रास्वरसूचकः॥ एतदभिप्रायेणैवचादावुत्तरलक्षणेनिप्रलंभातिप्रसंगमपसार्य
प्रथमलक्षणप्रविष्टशोकपदमनंतरंव्याख्यातं॥ एवमेवचोत्तरत्रापिवैकल्पिकपक्षांतरसमुपन्यासोव्यास्येयः॥ तंविभजते॥ अत्रबंधनाद्यु

शोकस्यपरिपोषःकरुणः॥ आशाविच्छेदेसतिसर्वेंद्रियक्षोभोवा॥ नचविप्रलंभेतिव्याप्तिः॥ तत्रेष्टाशायाःसत्वात्॥ तद्विच्छेदेतुस
विप्रलंभःकरुणएव॥ शोकोदुःखं॥ वर्णोस्यकपोतचित्रितः॥ दैवतंवरुणः॥ सचस्वनिष्ठःपरनिष्ठश्च॥ स्वशापबंधनक्लेशानि
ष्टैर्विभावैःस्वनिष्ठः॥ परेष्टनाशशापबंधनक्लेशादीनांदर्शनस्मरणैर्विभावैःपरनिष्ठः॥ स्वनिष्ठोयथा॥ तवनाथशरःशरासनंतव
देहेनसहैवभस्मसात्॥ अहमस्मिनतःप्रतीयतेतवनास्मीतिकिमुच्यतामितः॥

पाधीनांशोकविभावत्वेस्वसमानाश्रयालंबनत्वंस्वनि
ष्ठत्वंस्वव्यधिकरणलंबनत्वंचपरनिष्ठत्वं॥ बंधनकर्मीभूताद्युपधेयानांतथात्वमितिसिद्धांतेतुस्वाश्रयालंबनत्वंस्वाश्रयान्यालंबनत्वंचपरनिष्ठ
त्वंवाच्यं॥ नचैवंबंधनाद्युपसनादितिभरताचार्योक्तिविरुद्धमितिवाच्यं॥ बध्यमानस्यापिबंधनंविनानकरुणविभावत्वमित्यर्थध्वननायैवतत्
योक्तेरेवंसर्वत्रविभावैरीतिरनुसर्तव्यातदुक्तंममरभट्टैः॥ व्यापाद्यदेवविभावाइतीत्यभिप्रेत्याह॥ हेनाथतववास्तविकत्वसंबंधभाक्शरः रामः
शरासनंवातवदेहेनसहैवयोगपद्यायोगव्यवच्छेदस्यैवकार्थः॥ भस्मसाद्भस्मीभूतमभूत्॥ अहमस्मिनतुभस्मीभूताननोभस्मीभावाभावा ७६

त्वनास्मि त्वदीयसंबंधभाङ् भवामीति प्रतीयते आक्षिप्यते इत एवंविधनिश्चयानंतरं किमुच्यतां मां विहाय कथं परलोकपथिको भूरिति
किंवक्तव्यमित्यर्थः॥ वनमालस्यानुयांतं बाष्पवारि त्यजंतं मृदितेत्यादि म्लानसरोजमालाकृशांगाममालोच्य दिनमपि श्रेतनसंताप
कैमुत्यमाह॥ रवीति सौरप्रचंडातपलक्षणं तापमार्तिज्वरमेतमध्येन्ह इत्यर्थात् प्रसूते प्रकटयति वस्तुतस्त्वंतः पदसमभिव्याहृततापप
दमेव ज्वररूपकपरमित्यलं क्लिष्टकल्पनया॥ रजनिरपि च तारकेति तारकालक्षणान्बाष्पबिंदून्धत्ते पुष्णातीत्यर्थः॥ रौद्रं लक्षयति॥ प्रागुक्त
युक्त्या लक्षणांतरमाह॥ व्याख्याततत्त्वमेतत्॥ ननु देवतया भेदाध्यवसायात्तदीयवर्णे नरसे वर्णाध्यवसाय इति प्रागुक्तं रुद्रस्य च कर्पूरधव

परनिष्ठो यथा॥ अनुवनमनुयांतं बाष्पवारि त्यजंतं मृदितकमलदामक्षाममालोच्य रामं॥ दिनमपि रविरोचिस्तापमंतः प्रसूते
रजनिरपि च धत्ते तारकाबाष्पबिंदून्॥ परिपूर्णः क्रोधो रौद्रः॥ सर्वेंद्रियाणामौद्धत्यं वा॥ वर्णोस्य रक्तो दैवतं रुद्रः॥ यथा॥ चंडां
शुः किं न चक्रं भुजगपतिरसौ वर्तते वा न पाशः कुंताः किं दंति दंता न च गिरिरशनिः किं न शस्त्रैः किमन्यैः॥ लो वर्णः स्मर्यते तत्कथं

रौद्रस्य रक्तो वर्ण इति चेत्सत्यं॥ यादृशांतःकरणवृत्तिकाले यो देवताया वर्णोनुभूयते तेन वर्णे नरसस्य वर्णवत्ताध्यवसीयते तथा च क्रोधाधिष्ठि
तस्य रुद्रस्यापि वर्णो रक्तो भवति सकलानुभवसंवादिप्रमाणमूलककल्पनाया अपि प्रामाण्यात्॥ स्मर्यते च कोपेन चास्यावदनं मषीवर्णमभूत्त
देति क्रोधसमावेशे वदनलौहित्यं देवताया अपि मषीगंजेति भाषिते तिनानपपत्तिगंधोपि॥ चंडांशुः सूर्यश्चक्रं किं नेत्यनेन रूपयाकाकेद्मेनसु
लभं चक्रमिति निपुणतार्थो गम्यते एवमग्रेपि॥ असौ धराधारो भुजगपतिः शेषः पाशो वा न वर्तते दंति दंताः कुंताश्च कुंतायुधानि न गिरिरशनिः
किं नान्यैरनद्यतिरिक्तैः शस्त्रैः किमलमहं भीमो नान्यसाधारणकर्मा नरएनभीमवाक्यमिति नोपन्यस्तमिति संप्रदायः दृष्टेति दुर्जनस्य दुर्योधन

समारणार्थं सम्यग्नन्वीकृतो दंडो यत्र तादृशो बाहुप्रकांडो भुजरूपावयवो यस्य तादृशः प्रत्यावृत्तेति पुनरुद्दीप्तः प्रकोप एव प्रलयकालि
काग्निर्यस्य तादृशः कस्यापि वश्यो धीनो नास्मीत्यर्थः॥ ननु व्यंग्यस्य कोपस्य प्रकोपपदेन वाच्यीकरणदोषात्कथं रसोदाहरणमेतदिति
चेन्निरवधानोसि॥ रसदोषेपि रसानपायादित्युक्तत्वादुदाहरणताया अक्षतेः॥ तथापि निखिलव्यंजकसमवधानमात्रादेव समुल्लसंत्यां
व्यंजनायां पुनर्व्यंग्यस्य वाच्यीकरणं कापेयकल्पं तदिमं दोषमसहमान उदाहरणांतरमाह॥ वयं क्रीडेत्यादि॥ क्रीडायै शरैः क्रीडितुं तुंगा उच्च
तरा ये तुरंगा अश्वास्तेषां टापाः शफास्तेषां पटलीभिः खर्वीकृता लघूकृताः सुवर्णाद्रिपर्यावधयो उर्वीधरा नगास्तेषां श्रेण्या स्फूर्जिताभिः प्रादुर्भू
ताभिर्धूलिधोरणीभिः रेणुपंक्तिरूपैस्तमस्तोमैरंधकारपटलैरवलीढं जगत्सामंतसैन्यादिबद्धेति॥ भोगीश्वराणां दैर्घ्यममृष्यंतो ये हस्ति

भीमोहं दुष्टदुर्योधननिधनसमुद्दंडबाहुप्रकांडः प्रत्यावृत्तप्रकोपप्रलयहुतवहो नास्मि कस्यापि वश्यः॥ यथा वा॥ क्रीडत्तुंग
तुरंगटापपटलीखर्वीकृतोर्वीधरश्रेणीस्फूर्जितधूलिधोरणितमःस्तोमावलीढं जगत्॥ बद्धस्पर्धकरींद्रवृंदचरणव्याभुग्नभो
गीश्वरव्यग्रोदग्रफणाग्ररत्नरुचिभिर्विद्योतयामो वयं॥ परिपूर्णउत्साहः॥ सर्वेंद्रियाणां प्रहर्षो वा वीरः वर्णोस्य गौरः देवतं शाक्रः॥

समुदायस्य चरणाद्दीर्घं दीर्घा इति यावत्॥ पत्तुबद्धस्पर्धानां रिपूणां करींद्रा इति व्याख्यानं॥ तस्य क्रमभंगाद्भोगीश्वरनमनानंतरमुपात्तानायक
प्रतिनायकयोः संपत्युत्कर्षापकर्षयोरभिमतमिति प्रतिहुंढिमतिकारकत्वाच्चोपेक्ष्यं॥ तैर्व्याभुग्नानां भारभराद्वक्रीकृतानां भोगीश्वराणां
धराधारभूतानां व्यग्राभिश्चलिताभिरुदग्राणामुत्कृष्टानां फणारत्नानां रुचिभिः पर्वतचूर्णनसंजातविवरनिःसृताभिरिति गूढाभिसंधिः
॥ विद्योतयामः प्रकाशयाम इत्यर्थः॥ अत्र चक्रवेरन्यस्य वा बुद्धिस्थत्वाभावाच्चूर्णिकाकृता कृतवद्भवनीतिबोध्यं॥ वीरं लक्षयति॥ उक्तयुक्त्या लक्षणं

उत्साहवैलक्षण्यं कारणवैलक्षण्याधीनमिति तदाह॥ तमेव विशेषं दर्शयति॥ एवं बहुतरनिबंधनिरीक्षणादि प्रभवविलक्षणोत्साह
परिपोषात्मकपांडित्यादिवीरा अप्यतिरिच्यंतामिति चेदत्राह। इति पुनः सप्रपंचमुपपादितप्रायमधस्तात्॥ एतेषामुदा
हरणानां गर्वादिध्वनित्वमभ्युपगच्छद्भिः कथंकारं युद्धादिवीराणां सर्वरसानामेव वाते षां तत्तद्व्यभिचारिध्वनित्वं नाभ्युपेयते॥ स्यापि प्र
तीतिस्तु समानयोगक्षेमैवेति नायं पंथाः॥ दशमुखे रावणे संग्रामांगणं युद्धभूमावागते स्थिते सति सौमित्रिणा विस्मितं॥ अद्यैव कृतकृत्या
भविष्याम इति हर्षात्॥ सुग्रीवेण विचिंतितं॥ कथमहमेवैनं निहत्य श्रीरामस्यानृणीभविष्यामीति चिंताविषयः॥ हनुमता व्यालोलं रामस्य

सच त्रिधा युद्धवीरदानवीरदयावीरभेदात्॥ इयांस्तु विशेषः॥ स चोत्साहो युद्धवीरे प्रतापाध्यवसायादिप्रभवः दानवीरे दा
नसामर्थ्यादिप्रभवः दयावीरे आर्द्रतादिप्रभवः॥ युद्धवीरो यथा॥ संग्रामांगणमागते दशमुखे सौमित्रिणा विस्मितं सुग्रीवेण
विचिंतितं हनुमता व्यालोलमालोकितं॥ श्रीरामेण परं तु पीनपुलकस्फूर्जत्कपोलश्रिया सांद्रानंदरसालसानि दधिरे बाणा
सनेहष्टयः॥ दानवीरो यथा॥ अभ्यागच्छति मंदिरं द्विजकुले खंडायखंडानुपिंसाराब्धिं लवणाय दुग्धजलपिंदुग्धाय चद्रासवि॥

लवणयोर्द्वैधेरपि युगपच्चक्षुः संचारं यथा स्यात्तथालोकितं॥ श्रीरामेणाऽत्रं चेदेनं बध्वा पातयिष्यामीत्यालोकनाशयः॥ श्रीरामेण तुबाणासनेह१
यः परं निदधिरे स्थापिताः॥ कीदृशेन रामेण पीनेत्यादि॥ उत्साहकार्यांगपुष्टिभाक्॥ तथा पुलकैः स्फूर्जंती कपोलश्रीर्यस्य तेनेत्यर्थः॥ किंभूतादृ९
यः सांद्रेति निबिडानंदात्मके न रसेनालसा इत्यर्थः॥ अत्रेदं कवेरुक्तिसौष्ठवं॥ यत्पूर्वार्द्धे व्यालोलादिपदसमभिव्याहारेण हनुमदादिनिष्ठा परिपु
ष्टि उत्साहस्तथा तराईसु परिपूर्णो सो प्रतीयते इति स्थायिभावसंकीर्णे रसोदाहरणमेतद्रसोदाहरणस्थायिभावोदाहरणयोर्निशेषावगतये समुपन्य

सं॰ टि॰ प्रकाश॰ ७॥

र·त· यद्वा ब्राह्मणकार्यं संसादयितुं वपुः शरीरं यस्य तादृशाय परमपुरुषायेति यावत्॥ तस्मै रामाय नमोस्तु तस्मै कस्मै दिव्यापगा गंगा इति भियेव नो ५।
१८ दीना सती यस्यांघ्रिं न जहाति न त्यजति॥ इतीति किं॥ द्विजकुलेर्थि सार्थं मंदिरं निजसदनमभ्यागच्छत्यतिथितां गतस्सति रामस्तत्वं डापरव
इंसंपादयितुं खंडाबुधिखंडसमुद्रं तथा लवणायसारात्भिंसारार्णवं दुग्धायदुग्धजलधिं दुग्धसागरं दास्यति विप्रसात्करिष्यति न हि मम
विरहः प्रियविश्लेषाद्दुर्वारोप्रतीकारो भवेदितीत्यर्थः॥ परदूषणकथारसिका अर्वाञ्चस्तु राम विषमकुविगतरतिभावां गतयैव दानवीरः प्र
मीयते इति कथं रसोदाहरणमेतदिति॥ तद्भ्रमसाभिधानं॥ यतो वांतरवाक्यार्थबोधपूर्वकोत्र श्लोके महावाक्यार्थबोधो विवक्षितः॥ न हि
न हि पदघटितोत्तरवाक्यार्थबोधस्तर्हि पदार्थबोधं विना भवति॥ न वा तर्हि पदार्थबोधः पूर्ववाक्यार्थबोधं विनैव भवितुमीष्टे॥ प्रकारांतरेण

दुर्वारो विरहो भवेदिति भियादीनेव दिव्यापगा यस्यांघ्रिं न जहाति विप्रवपुषे रामाय तस्मै नमः॥ दयावीरो यथा॥ दयाबीजं हरेर्नै
त्रमंकुरस्तत्र भास्करः॥ ततः समुच्छ्रिता वेतौ पल्लवौ रामलक्ष्मणौ॥ गुरुशिक्षादिना तर्हि पदार्थबोधांगीकारे पूर्ववाक्यत्वे यथ्योपपत्तेः॥
अत एव शब्दालोके वाक्यार्थकर्मके कुलकादौ चावांतरवाक्यार्थबोधनियमो महावाक्यार्थबोधसमर्थिनः पक्षधरमिश्रैः॥ तदेवं पूर्वोत्तरवाक्या
र्थबोधयोः पौर्वापर्ये जागरूके प्रधानतया पूर्ववाक्यार्थप्रतीतिदशायामुदाहरणे श्रोत्रा न बुद्ध्युपारूढे यावृत्स्तांगभावो किं विलक्षण इत्याशयात्
॥ हरेर्विलोचनैत्रे दयायाबीजं असाधारणं कारणं॥ अत्र दयापदशक्यैकत्वाविशेषातिरिक्तरूपेव व्यंग्यतथाभूतदयावीरोत्साहगमकोरसणादिरू
पव्यापारो दयापदार्थ इत्याशयान्न वमनाख्यो दोषः॥ तत्र बीजे अंकुरो भास्करो जायत ततोंकुरादेतौ रामलक्ष्मणौ पल्लवावभूतामित्यर्थः॥ अत्रेदश राम:
पल्लवारोपानुगुणानुभावानुभावितो गम्यजगद्विभावितो गम्योत्साहचिंतादिसंचारितो दयावीरोत्साहो व्यंग्य इत्युदाहरणसंगतिरित्याशस्तांताव १८

यथा स्मत्कृतरसमीमांसायां॥ हुंवारवं गुरोर्गौः प्ररूढसिंहादिलीपआवेष्य॥ आनर्तितभुपुटकः स्वयमपतत्स्व्यपिंडइव॥ नवाधीरा नवीरइतिसांप्रतं॥ विनिमयेह्यस्मिन्दानत्वासंभवात्॥ भयानकं लक्षयति॥ लक्षणांतरमाह॥ विभजते॥ अत्रापिप्राग्वदेवस्वसमाना धिकरणविभावालंबनत्वंस्वाश्रयालंबनत्वंवास्वनिष्ठत्वमित्याशयेनाह॥ स्वनिष्ठादित्यादिः॥ शिशुवपुर्देवः श्रीकृष्णः गोपीक्षीरादिगोपांग नानांक्षीरसंभृतघटीसंबंधिविलुठनफलकस्तौयव्यापारविषयककथाभित्तयोः पित्रोर्नंदयशोदयोः कर्तृकिषष्टीताडनान्वितस्वार्थ मभिधत्तेताडनस्यशंकासंभावनंतेनज्वरंप्रकाशयगात्रप्रकंपादिनाभिनीयसायंतमसिप्रसर्पतिसतिगृहंसमागच्छति॥ तमभिनय

भयस्यपरिपोषः॥ सर्वेंद्रियाणांविक्षोभोवाभयानकः॥ वर्णोस्यश्यामः॥ दैवतंयमः॥ सचस्वनिष्ठः परनिष्ठश्च॥ अपराधकृत निष्ठोयथा॥ गोपीक्षीरघटीविलुठनविधिव्यापारवार्ताविदोः पित्रोस्ताडनशंकयाशिशुवपुर्देवः प्रकाश्यज्वरं॥ रोमांचरचय न्दृशोमुकुलयन्स्त्रस्तगमुत्कंपयन्सीत्कुर्वंस्तमसिप्रसर्पतिगृहंसायंसमागच्छति॥ परनिष्ठोयथा॥ गंगायाःसलिलेनिमज्ज तिजटाजूटेपरिभ्राम्यतिभ्रश्यत्यक्षिहुताशनेफणिफणाभोगेक्वचिल्लीयते॥ मेवविशेषणचतुष्टयेनाह॥ रोमांचमिति॥ विवस्त्री

करणसंभूतशीतात्युत्थंरचयन्ज्वरसंभूततयाबोधयन्दृशोमुकुलपन्ज्वरस्यासह्यवेदनत्वमुद्भावयन्स्त्रस्तंगमुत्कंपयन्निभृतप्रपलनसाध्यं कंपंज्वरसाध्यतयाप्रतिपादयन्नेतदनुगुणतयैवसतिसप्रसमंतमुपन्यस्तंसीत्कुर्वन्नुसंश्वासेनापूरयन्नित्यर्थः॥ स्वव्यधिकरणविभावालंब नत्वंस्वाश्रयान्यालंबनत्वंवापरनिष्ठत्वमित्याशयेनाह॥ परनिष्ठकोयथादित्यादिः॥ बालःकलावशिष्टस्तुषारद्युतिर्हिमांशुराहोरास्यमुद्रि स्यकिंकीदृक्साहसंनकुरुतेनानुविष्टतिनस्साहसमनारुह्यनरोभद्राणिपश्यति॥ साहसेचसमारूढेयदिजीवतिपश्यतीतिशास्त्रादिति

गंगा या यमुनयाः सलिले निमज्जति जटाजूटे हरस्येत्यनुषज्यते॥ एवमग्रेऽपि॥ परिभ्राम्यति॥ अस्मिन्ताशने भ्रश्यति स्खलति फणिफ णाभोगेक्वचिदंतर्गते लीयते अंतर्भवति कुब्जीभूय शरीरं प्रवेशानुगुणीकृत्य हरस्य कर्णसुषिरं विवरं निर्गंतुमुत्कंठत इत्यर्थः॥ परकृता दिल्वादिः॥ दशमुखे दशभिर्मुखैर्नादं कुर्वाणे सति सुरैर्देवैः कंपितं दिङ्नागैरैरावताद्यैश्चकितं हरेस्तु पेस्य हयैः सप्तसंख्याकैरपि॥ अत्र केचित्॥ एको अश्वो वहति सप्तनामेति श्रुतेर्बहुवचनानुपपत्तिरिति॥ तत्र ब्रूमः॥ एकस्मिन्नश्वे सप्तपदरूढिप्रविपादिका साश्रुतिर्नोश्वैकत्वमवधारयति॥ सप्त युंजंतीति श्रुतेः॥ परस्परभेदप्रसक्तगतिवैरूप्यपरिहारार्थं चैकत्वमुक्तमिति तमिति॥ अतएव रथस्य सप्तयः सप्तेति

कुब्जीभूय हरस्य कर्णसुषिरं निर्गंतुमुत्कंठते यद्भोरास्य मुदीक्ष्य किं न कुरुते बालस्तुषारद्युतिः॥ विकृतनिनदास्वनिष्ठाय
या॥ कुर्वाणे दशभिर्मुखैर्दशमुखे नादं सुरैः कंपितं दिङ्नागैश्चकितं हरेरपि हयैरुत्कुमाधावितं॥ सुग्रीवस्तु समुच्छलज्जल
निधिव्यालोलवीचिभ्रमिभ्रश्यत्सेतुविशंकया हनुमतो वक्रे दशो संदधे॥

सप्तसप्तिपदं विवृण्वते बहवः श्रुत्यर्थदर्शिनः॥ उत्पुक्कं ऊर्ध्वपुक्कं यस्मिन् कर्मणि यथा भवति तथेति स्वभावोक्तिरासमंताद्धावितं सुग्रीवः पुनः समुच्छलतेति सुश्च स्वच्छजलनिधेर्व्यालोलावेगवत्तराद् इति यावत् वीचयो लहर्यो भ्रमय आवर्तास्ताभिर्भ्रश्यतः सेतोर्विशंकया सेतुभ्रंशशंकयेति यावत् हनुमतो वक्रे दशो संदधे योजयामासेत्यर्थः॥ केचित्त्वत्र सुग्रीवेणेत्यग्रे च संदधे इत्यत्र योजिते इति पाठं कल्पयित्वा प्रक्रमभंगमुद्भिधीर्षंति॥ तन्न॥ भावकर्मप्रत्ययकृतस्यास्य तावताप्यनुद्धारात्॥ वयं तु ब्रूमः॥ पूर्वार्द्धे आकस्मिकल्लास उत्तरार्धे संभावनापूर्वकं तिङर्थप्रयत्नप्रतिचिकीर्षितं भयमित्यनयोर्विशेषावगतये समुर्थः प्रक्रमभंगो गीकृतो न दूषणमिति॥ एतेन सुग्रीवस्येति सुग्रीवेणेत्येव वा तत्र एवाग्रे कर्तृकरणतृतीयाभेदेन व्यवस्थितस्य वक्रे दशो संस्थित

विशेषणनिरर्थकप्रायत्वे प्रसक्तस्यापुष्टार्थत्वदोषस्य तत्साभिप्रायत्वमात्रेण परिहारवद्यथाश्रुतपाठे प्रसक्तस्यास्य तस्मिन्नेव निरुक्तता सपर्यग्रहकत्वमात्रेण परिहारे ऽपि सामंजस्यसंभवात्॥ बीभत्सं लक्षयति॥ लक्षणांतरमाह॥ विभजते॥ स्वसमानाधिकरणविभावालंबनत्वं स्वाश्रयालंबवत्वं वा स्वनिष्ठत्वं स्वव्यधिकरणविभावालंबनत्वं स्वाश्रयान्यालंबनत्वं वा परनिष्ठत्वं प्राग्वदिहापि बोध्यं॥ भार्गवो बद्ध इति स्फुटीशीलानां शास्त्रवर्गानारुधिरसंभृतायाः स्रोतस्विन्या नद्याः स्रोतसि प्रवाहे भ्रश्यति पतत्सु द्रुमति मुह्यति॥ अथेति किंचेत्यर्थः॥ स्खलति स्खलितं धत्ते॥ कीदृशो भार्गवो रामेति॥ संग्रामानुगुणक्रोधव्यग्र इत्यर्थः॥ कथंभूते स्रोतसि कालीत्यादि॥ योगिनीविशेषयोः कुतूहलेन कौतुकेन पर
जुगुप्सायाः परिपोषो बीभत्सः॥ सर्वेंद्रियाणां संकोचो वा॥ वर्णोऽस्य नीलो देवतं महाकालः॥ स च स्वनिष्ठः परनिष्ठश्चेति॥ स्वनिष्ठो यथा
॥ कालीकुंडलिनीकुतूहलमिषः प्रारब्धथूथूत्कृतिन्यंचद्वीचिचलद्विहायसि वलद्विस्फूलिंगानि पातस्त्रुटि॥ बद्धस्पर्द्धविपक्षपक्ष
धिरस्रोतस्विनीस्रोतसि भ्रश्यत्सु द्रुमति स्खलत्यथ रणक्रोधाकुलो भार्गवः॥ परनिष्ठो यथा॥ कृत्त्रकुंभीं द्रूकर्णविरचयतनुतं चाम
रं व्यालपट्टैर्मौलां मुंडैः प्रचंडैः सृजगजजघनैर्मेंडपं योजयस्व॥ ७ स्फारं प्रारब्धापाथूथूत्कृतिर्निष्ठीवनशब्दानुकरणमेतत्संपू
त्कृतीति का वित्कः पाठो युक्ततरस्तथान्यं चं स्रोयावी चयस्तासु चलद्विहायोगगनतारास्ताल्व्या यत्र तादृशि॥ पुनः कीदृशे तस्मिन् पव
नदिति॥ वलतीनांश्चिलीनां निपातः परिपतनं तद्वाजीत्यर्थः॥ कुंडलिन्याः प्रेतमुख्याया स्तनयेत्यादि॥ वनयस्य प्रेतस्य यः परिणयो
विवाहस्तदीयप्रारंभाज्जन्म यस्य तादृशः प्रेतेत्यादि प्रेतेषु च रूढाजरठाया अंगनाः स्त्रियस्तासां प्रायेणैवं विधेकार्यपरंध्रीणां प्रगल्भते
तिदृष्टत्वादंगना ग्रहणं इत्येवं विधआलापउद्बोधावभूवजातः॥ दृतीति किं॥ कुंभीं द्रूकर्णविस्तृतत्वात्कुंभं विरचय॥ लग्नकालसंनि
धापयस्व यसैव शीघ्रं यद्यत्कार्यं निर्माणे नैपुणं पतेन तेनैव तत्तत्कार्यं कर्तव्यं न तु प्रतिनियतकेन चित्किं चिदिति त्वराविशेषस्य सूचकार्थस्यो

र.त. ८० यद्यपि भेद्यलिंगः शठे व्यालः पुंसि श्वापदसर्पयोरिति कोशाद्व्यालशब्दः श्वापदसामान्यवाची तथापि प्रकृते कुंभींद्रकर्णैरिति विशेषण नौका
समभिव्याहारादस्य रूपविशेषपरो दृष्टव्यः॥ क्वचित्तु वाजिपुंजैरित्येव पाठः॥ चामरं तनुतं॥ हिकंवकस्याभयं तस्ममरो इन्नन्स्यैकपदार्थ
त्वावगत येदिवचनांतक्रियापदसमभिव्याहारेणैकवचनांतकर्मपदं॥ प्रचंडे रुग्रदर्शने मुंडैर्मालास्रजमजजजयनैरुवेस्तरलान्मंडपसंस्थान
विशेषयो जयस्त॥ अंत्रैर्नीराजनाया विधिं वपूर्वोदेस्यक्रियाविशेषात्मकलोकाचारं कलयतीत्यर्थः॥ अत्ररसाश्रयोद्दृष्टपुरुषआसेप्यदृत्य
गेयत्तौ भविष्यति॥ अद्भुतं लक्षयति॥ लक्षणांतरमाह॥ तं विभजते॥ स्वसमानाधिकरणविभावालंबनत्वं स्वाश्रयालंबनत्वं वा स्वनिष्ठत्वं॥ स्वय

अंत्रैर्नीराजनायाः कलयविधिमिति प्रेतकूद्यांगनानामालापः कुंडलिन्यास्तनयपरिणयारंभजन्मा बभूव॥ विस्मयस्य स्वस्य क्रमस्
द्विरद्भुतः॥ सर्वेंद्रियाणां ताटस्थ्यं वा॥ वर्णोस्य पीतो देवतं ब्रह्मा॥ स च स्वनिष्ठः परनिष्ठश्च॥ स्वनिष्ठो यथा॥ लीलानिबद्धपाथोधि
हेलाहतदशाननः॥ स रामः सीतयाश्लिष्टमात्मानं बद्धमन्यत॥ परनिष्ठो यथा॥ त्यक्त्वा जीर्णदुकूलवद्वसुमतीं बद्धाऽम्बुधिं बिंदुवद्धा
णाग्रेणाजरत्कपोतकद्द्ववद्व्यापादितो रावणः॥ धिकरणविभावालंबनत्वं स्वाश्रयान्यालंबनत्वं वा परनिष्ठत्वमिति बहुधोक्तमेवात्रापि
वाध्यं॥ स रामः सीतयाश्लिष्टमात्मानं बद्धमन्यतसकः॥ यो लीलानिबद्धपाथोधिः पुनः सकः॥ यो हेलाहतदशाननः॥ पूर्वार्द्धे द्वितीयांतपाठे तु
स प्रसिद्धो रामो लीलानिबद्धपाथोधिमपि हेलाहतदशाननमपि चात्मानं सीतयाश्लिष्टं बद्धं मन्यते ति विधिविशेषणीभूतसीतत्वादेरुद्देश्य
तावच्छेदकतया पूर्वार्द्धोपात्तविशेषणद्वयस्य योजनीयं तथा च यथा सीताश्लेषेण विस्मितोऽभूत्तथा न केनापीति भावः पाठद्वयेपि पर्यवसानं॥ स्व रामः
रघुनंदनस्य चरितं श्रुत्वा को वा जनो न रोमांचति॥ रोमांचमंचनं रोमांचः सोऽस्यास्तीति यद्वा रोमाणं चर्त्वीति किंवांचतीत्यंचो रोम्णामञ्च इति रोमांच ८०

शब्दनिष्पत्ताचाचारकिपिरोमांचतीतिरूपनिष्पत्तेः संजातपुलकोनभवतीत्यर्थः॥ एवं किं तदाहस्यक्तेति॥ जीर्णदुकूलवन्ममतानां
लिंमितत्वाहसुमतीत्यक्तांबुधिर्बिंदुवदनायासबंधनाद्दृढःकृतसेतुःबाणाग्रेणजरत्कपोतकइवदुर्बलत्वाद्रावणोत्मापादितःकाप्य
परिमितसंपच्छालिन्यपिलंकामुद्रेवाल्पत्वाभिमानाद्विभीषणायविभीषणमाश्वासयितुंसहसाप्रथमदर्शनएवहस्तेर्पितानतुप्रति
ज्ञामात्रमित्यादीत्यर्थः॥ अद्भुताएवाद्भुतरसाभिव्यंजकाएव॥ एषकोलावतारोवराहतनुर्हरिः सतांसाधूनांहितायभूयात्॥ कएषः भूस्य
द्धारप्रसंगेसिंधोर्मज्जनाज्जातंक्लेशमपास्ययस्यदशनप्रांतेदंताग्रेस्थितायाभुवः॥ अत्रताराकृतंकृहारसदृशाचाराअनुगुण्यस्थितोबाधपि

लंकाकापिविभीषणायसहसाअद्रेवहस्तेर्पिताश्रुत्वैवंरघुनंदनस्यचरितंकोवानरोमांचति॥ अत्युक्तिभ्रमोक्तिचित्रोक्तिविरो
धाभासप्रभृतयोद्भुताएव॥ अत्युक्तिर्यथा॥ भूयादेषसतांहितायभगवान्कोलावतारोहरिः सिंधोःक्लेशमपास्ययस्यदशनप्रांते
स्थितायाभुवः॥ ताराहारतिवारिदस्तिलकतिस्वर्वाहिनीमाल्यतिक्रीडादर्पणतिस्पापतिरहर्देवश्चताटंकति॥ यद्वा॥ दिव्य
हरमुखकुहरेविस्तीर्णपर्णतिव्योम॥ चूर्णतिचंद्रःकमुकतिकनकगिरिःखदिरसारतिखरांशुः॥ तंक्लेशमपास्यस्थितायादत्युक्तं॥ अ

त्यथास्थित्वापास्तक्लेशायाइत्येवावस्यत्॥ तेनभगवत्संश्रयणमात्रस्यसकलक्लेशापासनफलोपधायकत्वरूपेकार्यकारणव्यतिक्रमस्यप्रत्ययभ्रा
वत्संसाहाय्यमाचरतीतिबोध्यं॥ ताराःनक्षत्रमालाहारस्युज्ज्वलमणिहारवदाचरतिवारिदोमेघस्तिलकतितिलकरूपोभवतिस्वर्वाहिनीगंगामा
ल्यतिस्रक्त्वात्शुभ्रमालारूपाभवतिस्पापतिश्चंद्रःक्रीडादर्पणतिलीलामुकुरायतेअहर्देवःसूर्यस्ताटंकतिस्वर्णवर्णत्वादित्यर्थः॥ अत्युच्चैरुद्धरणाभिप्रा
यमद्भुतातथ्यवर्णनमिदंतत्ररतिभावांगतायामपरितुष्यन्नाविष्णुःपृथिवीपतिरित्यनुसारेणदीपयत्यवहारोचितंप्रसंगात्परस्परंविष्णुपृथिव्योरनुरागा

र॰त॰ दिग्वहरेः क्रोधावतारस्य विस्तोमुखकुहरे मुखरंध्रे व्योमयर्णेतिनागवल्लीदलीयस्वल्पपरिमाणवत्तया प्रतीयमानत्वाच्चंद्रश्चूर्णेति चूर्णस्या नौका
८१ नाभिषिक्तं भवति पर्णैकदेशं गुह्व संघटितचूर्णसंस्थानतुल्यार्धपरिमाणवत्तस्य प्रकाशमानत्वात्॥ कनकगिरिः क्रमुकेति पोटाय तेतत्तु
ल्यपरिमाणताध्वनसा यात्खरांशुः सूर्यः खदिरसार तिमुखांतर्गतजगद्रंजकत्वादित्यर्थः॥ हेरंबस्य गणपतेः दंतेति दंतस्य शिखरमिव शि
खरमग्रभागस्तस्य॥ एतेन दंतस्य पर्वतसारता प्रकाशिता॥ अतएव दंतएव शिखरमिति व्याख्या शिखरसारता प्रत्याषिका पुपेक्षिता॥ व्या
पार उत्कीर्णनानुकूलस्तत्र यो लीलारसः प्रीत्यतिशयः स पुनातु मनोगोचरीभूय पवित्रीकरोतु॥ कथंभूतस्य हेरंबस्य पंकेति॥ पंके शुष्यत्समुद्र

भ्रमोक्तिर्यथा॥ तीव्रेऽस्तिम्यरुचः करैः परिचितां सेकुंकपोलस्थलीं नीराणां निकरं करेण हरता नुच्छीकृते वारिधौ॥ मैनाकं सम
द्रीस्य पंकयतितं शालूकशंकाजुषो हेरंबस्य पुनातु दंतशिखरव्यापारलीलारसः॥ यथा वा॥ अंतः क्रोधाग्निजाग्रत्कपटनरहरि
स्फारनिश्वासवातव्याधूता वारिवाहाः कुलधरणिभृतः सानुषु प्रस्खलंतः॥ कर्दमे पतितं मैनाकं मैनाकनामकं हिमालयतनय

मुद्रास्य शालूकेति॥ शालूकं कंदविशेषस्तस्य शंका संशयस्तं जुषते धत्ते तस्येत्यर्थः॥ कस्मिन्सति तीव्रैरतिशयेनोष्णैस्तिग्मरुचः खरांशोः करैः
किरणैः परिचितां संबद्धां तप्तामिति यावत्कपोलस्थलीं गंडस्थलीं सेक्तुं नीराणां निकरं हरता करेण शुंडादंडेन नीरधौ समुद्रे तुच्छीकृते शुष्की
कृते सतीत्यर्थः॥ एकत्रैव विषये कर्तृभेदेन नानाधर्मारोपरूपां भ्रांतिविच्छित्तिविशेषां योदाहरति॥ मनः संस्थितक्रोधरूपेणाग्निना जाग्र राम:
तः प्रादुर्भूतायैकपटनरहरेर्धृतावतारस्य नृसिंहस्य स्फारबहुलीभूता निश्वासवातास्तैर्व्याधूताः क्षिप्ताः कुलधरणिभृतः कुलाचलस्य सानु ८१
षु शिखरेषु प्रस्खलंतो वारिवाहा मेघा दिङ्नागैर्दिग्गजैर्नागबुद्ध्याहस्तिभ्रांत्या वनहरिणकुलैः शाद्वलानां नडशादाहूलचूहरितृणाढ्यस्थलीनां

शंकया किरातैर्भिल्लैरुल्लासाभिभूतैरिति यावच्छायाभ्रांत्या सर्वधूभिर प्सरोगणैः क्षितिवसनधियासमुपास्यमानकृत्तिवासो वुद्ध्यावीक्षिताः॥ तेषां तेषां प्रबलाभिलाषस्येव प्रबलद्वेषस्यापि संस्कारोद्बोधकत्वात्तत्तदभिलाषादिस्तत्तदारोपे हेतुरिति हृदयं॥ गिरिस्तत्त्वेनाध्यवसितं कुचमंडलं मौक्तिकावलिं तत्त्वेनाध्यवसितां स्वेदबिंदुरचनां वमत्युद्गिरति॥ अलिहृदयं तत्त्वेनाध्यवसितं लोचनयुगलं स्थावरं निश्चेष्टं॥ शरत्तुहिनदीधितिरुद्भटप्रकाशात्तत्त्वेनाध्यवसितं मुखं व्यजनमारुतं मध्यमध्ये स्तंभनात्तत्त्वेनाध्यवसितं म्भ्रासंवांकृतिं संधत्ते॥ मान्मथं कामस्य धनुस्तत्त्वेनाध्यवसितं भ्रुकुटियुगं स्वपिति नाटस्थ्यं भजते॥ अंधंतमोऽतिनैल्यात्तत्त्वेनाध्यवसितः केशपाशः शिथिलबंधगलितबंधनं

दिङ्नागैर्नागबुद्ध्यावनहरिणकुलैः शंकया शाद्वलानां छायाभ्रांत्या किरातैः क्षितिवसनधियावीक्षिताः सर्वधूभिः॥ चित्रोक्तिर्येषां॥ गिरिर्वमति मौक्तिकावलिमलिहृदयं स्थावरं शरत्तुहिनदीधितिर्व्यजनमारुतं वांछति॥ धनुः स्वपिति मान्मथं शिथिलबंधमंधंतमो नमो मनसिजायने किमपि कौतुकं तन्वते॥ लाक्षणिकमखिलं चित्रोक्तिरेव॥

भवतीति किमपि स्वस्यानुभवैकवेद्यं कौतुकं चमत्कारं तन्वते ते मनसिजाय नमोनन्यसाधारणकलापात्रत्वादित्यर्थः॥ सारोपलक्षणापि चित्रोक्त्यंतर्गतैव नातिरिक्तेत्याह॥ सारोपसाध्यवसानभेदभिन्नलक्षणासंबंधिपदघटितवाक्यसामान्यमित्यर्थः॥ यथा मम॥ कुचकनकगिरिप्रांतः स्वेदांभोमौक्तिकाक्रांतः॥ तव निधुवनपांडित्यं पिशुनयितुमयं विपर्ययो जातः॥ यथा वा ममैव॥ अयि नीलांशुकवृंते निर्मलदंतांशुकेसराकीर्णे॥ लोलासि भृंगमालिनि कांते वासंतिकासिकस्यापि॥ प्रागन्वयानुगुणतेवात्र सामान्यधर्मप्रयोगोप्युपमितसमासबाधकोस्तीति पूर्वस्माद्विशेषः॥ एवमुपमितसमासेन्वयसामंजस्येप्युक्तलक्षणादृश्यते॥ यथा मम॥ वलिनिःश्रेणिस्तनयुगचक्रे रोमालिशैवाले॥ नयनयुगलारविंदे कामिनि सरसी॥

रसकौमुदीटी॥

र॰त॰ ८२ हेमुकुंदतवकोप्यसौसर्वलोकप्रसिद्धप्रभावोनंदकः खड्गः कंससंपदोऽनंदकोनाशक इतिशब्दच्छलात्प्रतीयमानविरोधसमाधानशिरस्को नौका
विरोधाभासः॥अत्रनिंदक इतिपाठकल्पनाकुकल्पनैवेतिप्रतिभाति॥वास्तविकस्यैवापाततोपिविरोधस्फुरणस्याभावेनानुदाहरणत्वप्रसं
गात्॥हेमुकुंदत्वंकुंडलीकर्णभूषणभागसिसामीप्यंभजसेकालियंकालियनामानंकुंडलिनंकुतः किमुद्दिश्यदूरतोनमस्यपसारयसितदि
त्येवंरूपजिज्ञासाविषयरूपंप्रयोजनंनिवेदयकथयेत्यर्थः॥कुंडलिसामान्यापाकरणसमुद्देश्यकेनामुनाव्यापारेणकुंडलिसामान्या
पाकरणस्यतवसामीप्येऽसंभवादितिविरोधाव्यालसामान्यापाकरणसंभवादाभासरूपइति॥परंतुद्वयोरप्यानंदरूपत्वेतिप्रागुक्तंत
त्रानंदमयशृंगारादिप्रधानकाव्यनाट्ययोः सहृदयानांप्रवृत्तिसंभवेपिदुःखमयकरुणादिप्रधानयोस्तयोःकथंतेषांप्रवृत्तिरितिविशेषतः

विरोधाभासोयथा॥कोप्यसौनवमुकुंदनंदकोऽनंदकोभवतिकंससंपदः॥कुंडलीत्वमसिकालियंकुतोदूरतोनयसितन्निवे
दय॥नास्त्येवसर्वेरसाआनंदरूपाअद्भुताख्याःपरनिष्ठाएव॥

शंकामपाकरोति॥चकारःकाव्यसमुच्चायकः॥यद्यपिप्रागवद्द्वयोरि
तिवक्तुंयुक्तं॥अन्यथाकाव्येचेत्येवकिंनकृतमितिनियोगप्रसंगात्तथापिनाट्यरसेविशेषंवक्तुमित्थमभिहितं॥सर्वेरसाअनुपदंनिरूपि
ताअष्टावपि॥आनंदरूपाःकाव्यइवानंदरूपाएव॥वैशेषिकाणांपदपक्षकानुमानइवपरस्परंदृष्टांतदार्ष्टांतिकभावोपिसुसिद्धएव॥उभ
यत्रतथाविप्रतिपन्नस्यप्रतिपाद्यत्वेपिनकाचिदूनोक्तिस्तेनविना॥अत्रकविपुस्तकेनास्त्येवेतिपाठःसतुऋजुरेव॥इवार्थकएवशब्दस्यापिप्र
हाकविनिबद्धत्वात्॥काव्यात्मनउपमेयस्यप्रस्तुतत्वादेवलाभाच्च॥एतेनसकलरसाभिव्यंजकतयाकाव्यमेवोत्तमर्णमितितदेवप्रस्तुतमुप रामः
नेयंयुज्यतेननाट्यमितिप्रजल्पन्समाहितइतिपुनरपव्याख्यानं॥परनिष्ठाएवेत्यस्यतथापाठेविरुद्धमतिकारकतापत्तेः॥रसाधिकारसोल्ल ८२

नास्त्येव शांतरसो नास्तीत्यत्रापि ग्रंथकृन्निर्भरे साधकाभावाच्चेत्यनुपदं व्यक्तीभविष्यति॥ ननु लोकस्वभावादविवेके च न दुःखरूपा अपास्यवधारं
णार्थः॥ तच्च वितती कृतमधस्तात्॥ अधुनास्याः विस्मयाव्यभिचारिणः॥ परनिष्ठा एव न दया तिरिक्तसामाजिकगता एव एवकारेण काव्य
तु कविषु सहृदयेष्वपि वर्तेत इति सूचितं॥ नटस्यानुकारित्वनियमात्॥ कवेः सहृदयांतःपातित्वावश्यंभावादिति हृदयं॥ नात्यभिन्नवक्त
व्यशांतरसप्रतिद्वंद्वितया मायारसं व्यवस्थापयितुं भूमिकामारचयति॥ उपादेयतामतिर्हेयतामतिश्चेत्यर्थः॥ प्रतिभातीति॥ वक्तुं युज्यत
इत्यर्थः॥ अमंगलप्रायस्य निर्वेदस्य सर्वव्यभिचारिप्राथम्यसमाक्षिप्तवक्ष्यमाणोद्देशपाठदृढीकृतमुनिनातात्पर्यकः शांतरसस्तन्मता
नुसारिभिः संगीतरत्नाकरादौ व्यवस्थापितः॥ पूर्वपूर्वाचार्यानुभवसंवाद्यनुभवस्य शरणीकरणीयत्वात्॥ मायारसस्तु न तथानुभवसि

चित्तवृत्तिर्द्वेधा प्रवृत्तिर्निवृत्तिश्च॥ निवृत्तौ यथा शांतरसस्तथा प्रवृत्तौ मायारस इति प्रतिभाति॥ एकत्र रसोत्पत्तिरपरत्र नेति
वक्तुमशक्यत्वात्॥ न च सरतिरेव॥ तर्हि सकस्यास्तु व्यभिचारी॥ न शृंगारस्य॥ तद्वैरिणो बीभत्सस्यापि तत्र सत्त्वात्॥ द्धः॥ वक्ष्यमा

णमायारसोदाहरणे तु देवादिविषयकत्वाद्रतिर्भाव एव न रस इति मुनिवचोगौरवाद्वा अस्मिन्नभिप्रेत्य प्रतिभातीत्युक्तं॥ तथा च युक्तिसाम्यादा
धुनिकानुभवस्य विनिगंतुमशक्यत्वाद्योराधिक्ये प्रसक्ते पि भरततात्पर्यानुसारिभिः प्राचीनैः सर्वसंवाद्यनुभवापातः शांतः स्वीकृतो न मा
यारसः॥ स्वातंत्र्यालंबने बहूपप्लवापत्ते रितिभावः॥ व्यभिचारिण्या रसे वोपपन्ने किमतिरिक्तरसकल्पनेनेत्याशंकते॥ रसांतरकल्पनां विना
व्यभिचारितापि न संभवति रसव्यंजकत्वस्य तद्घटकत्वादित्याशयेनोत्तरयति॥ कृत्स्नव्यभिचारित्वमपाकरोति॥ तत्र हेतुमाह॥ न च विरुद्ध
योर्द्वयोरेकस्मिन्संस्थितिः॥ तथा च बीभत्ससंचारिन प्रबुद्धमिथ्याज्ञानवासनाभिव्यक्तिस्थले शृंगारस्यानास्वाद्यतया न तत्र शृंगारव्यभिचारि

र॰त॰ हेमुकुंदतवकोप्यसौसर्वलोकप्रसिद्धप्रभावोनंदकःखड्गः कंससंपदोऽनंदकोनाशकइतिशब्दच्छलात्प्रतीयमानविरोधसमाधानशिरस्को नैका
८२ विरोधाभासः॥अत्रनिंदकइतिपाठकल्पनाकुकल्पनैवेतिप्रतिभाति॥वास्तविकस्येवापाततोपिविरोधस्फुरणस्याभावेनानुदाहरणत्वप्रसं
गात्॥हेमुकुंदत्वंकुंडलीकर्णभूषणभागसिसामीप्यंभजसेकालियंकालियनामानंकुंडलिनंकुतःकिमुद्दिश्यदूरतोनयस्यपसारयसितदि
त्येवंरूपजिज्ञासाविषयरूपंप्रयोजनंनिवेदयकथयेत्यर्थः॥कुंडलिसामान्यापाकरणसमुद्देश्यकेनामुनाख्यापारेणकुंडलिसामान्या
पाकरणस्यतवसामीप्येऽसंभवादितिविरोधाभ्यालसामान्यापाकरणसंभवादाभासरूपइति॥परंतुद्वयोरप्यानंदरूपतेतिप्रागुक्तंत
त्रानंदमयशृंगारादिप्रधानकाव्यनाट्ययोःसहृदयानांप्रवृत्तिसंभवेपिदुःखमयकरुणादिप्रधानयोस्तयोःकथंतेषांप्रवृत्तिरितिविशेषतः

विरोधाभासोयथा॥कोप्यसौनवमुकुंदनंदकोऽनंदकोभवतिकंससंपदः॥कुंडलीत्वमसिकालियंकुतोदूरतोनयसितन्निवे
दय॥नास्त्येवसर्वेरसाआनंदरूपाअद्भुताख्याःपरनिष्ठाएव॥ शंकामपाकरोति॥चकारःकाव्यसमुच्चायकः॥यद्यपिप्राग्वद्द्वयोरि

तिवक्तुंयुक्तं॥अन्यथाकाव्येवेत्यस्यकिंनकृतमितिनियोगप्रसंगात्तथापिनाट्यरसेविशेषंवक्तुमित्थमभिहितं॥सर्वेरसाअनुपदंनिरूपि
ताअष्टावपि॥आनंदरूपाःकाव्यइवानंदरूपाएव॥वैशेषिकाणांपदपस्यकानुमानइवपरस्यरंदृष्टांतदार्ष्टांतिकभावोपिसुसिद्धएव॥उभ
यत्रतथाविप्रति॥नस्यप्रतिपाद्यत्वेपिनकाविदूनोक्तिस्तेनविना॥अत्रकविसुस्तकेनाट्येवेतिपाठःसतुकज्जुरेव॥इवार्थकवशब्दस्यापिप्र
हाकविनिबद्धत्वात्॥काव्यात्मनउपमेयस्यप्रस्तुतत्वादेवलाभाच्च॥एतेनसकलरसाभिव्यंजकतयाकाव्यमेवोत्तमणमितितदेवप्रस्तुतमुप
मेयंयुज्यतेननाट्यमितिप्रजल्पन्समाहितइतिपुनरपव्याख्यानं॥परनिष्ठाएवेत्यस्यतथापाठेविरुद्धमतिकारकत्वापत्तेः॥रसाधिकस्योत्व

रामः
८२

नास्त्येव शांतरसो नास्तीत्यत्रापि ग्रंथकृन्निर्भरे साधकाभावाच्चेत्यनुपदं व्यक्तीभविष्यति॥ ननु लोकस्वभावादविवेकेन च दुःखरूपाअपीत्यस्य व्याख्यानमुपदेशमपश्यतीति यावत्। तन्मयता अधारणार्थः॥ तच्च वितितीकृतमधस्तात्॥ अद्भुतास्याः विस्मयाद्व्यभिचारिणः॥ परनिष्ठा एव न दातिरिक्तसामाजिकगता एव एवकारेण काव्ये नार्थः॥ तच्च वितितीकृतमधस्तात्॥ अद्भुतात्स्याः विस्मया व्यभिचारिणः॥ परनिष्ठाएव नदातिरिक्तसामाजिकगताएव एवकारेण काव्ये
तुकविषु सहृदयेष्वपि वर्तंत इति समुचितं॥ न रस्यानुकारित्वनियमात्॥ कवेः सहृदयांतःपातित्वावश्यंभावादिति हृदयं॥ नात्यभिन्नवक्त
व्य शांतरसप्रतिद्वंद्वितया मायारसं व्यवस्थापयितुं भूमिकामारचयति॥ उपादेयतामतिहेयतामतिश्चेत्यर्थः॥ प्रतिभातीति॥ वक्तुं युज्यत
इत्यर्थः॥ अमंगलप्रायस्य निर्वेदस्य सर्वव्यभिचारिप्राथम्यसमाक्षिप्तवक्ष्यमाणोद्देशपाठदृढीकृतमुनिनातात्पर्यकः शांतरसस्तन्मता
नुसारिभिः संगीतरत्नाकरादौ व्यवस्थापितः॥ पूर्वपूर्वाचार्यानुभवसंवाद्यनुभवस्य शरणीकरणीयत्वात्॥ मायारसस्तु न तथानुभवसि

चित्तवृत्तिर्द्वेधा प्रवृत्तिर्निवृत्तिश्च॥ निवृत्तौ यथा शांतरसस्तथा प्रवृत्तौ मायारस इति प्रतिभाति॥ एकत्र रसोत्पत्तिरपरत्रेनेति
वक्तुमशक्यत्वात्॥ न चैवं रतिरेव॥ तर्हि सकलस्यास्तु व्यभिचारी॥ न शृंगारस्य॥ तद्वैरिणो बीभत्सस्यापि तत्र सत्वात्॥ द्रुः॥ वक्ष्यमा

णमायारसोदाहरणे तु देवादिविषयकत्वाद्रतिर्भाव एव न रस इति मुनिवचो गौरवाद्ध्याभिरपि तस्याभिप्रेत्य प्रतिभातीत्युक्तं॥ वस्तुतः युक्तिसाम्याद
धुनिकानुभवस्याविनिगंतुमशक्यत्वाद्द्वयोरधिक्ये प्रसक्ते पिभरतत्वात्पर्यानुसारिभिः प्राचीनैः सर्वसंवाद्यनुभवाच्छांतः स्वीकृतो न मा
यारसः॥ स्वातंत्र्यालंबनेबहूपप्लवापत्ते रिति भावः॥ व्यभिचारिणां रसेषूपपन्नो किमतिरिक्तरसकल्पनेनेत्याशंकते॥ रसांतरकल्पनां विना
व्यभिचारितापि न संभवति रसव्यंजकत्वस्य तद्दृढकत्वादित्याशयेनोत्तरयति॥ क्रुद्धव्यभिचारित्वमपाकरोति॥ तत्र हेतुमाह॥ न च विरुद्ध
योर्द्वयोरेकस्मिन्संस्थितिः॥ तथा च बीभत्ससंचारिनप्रवृद्धमिथ्याज्ञानवासनाभिव्यक्तिस्थले शृंगारस्यानास्वाद्यतया न तत्र शृंगारव्यभिचारि

र.त.
८३

अतएवस्वविरोधितावच्छेदकबीभत्ससामानाधिकरण्यतुल्यशृंगारसामानाधिकरण्यादेव॥एवमग्रेपि॥व्यभिचारिन्यायेनभुज्यमान
रत्यादीनामेवमायारसत्वंरसन्यायेनभुज्यमानानांतुतेषांशृंगारादित्वं॥अतएवमायारसइतिरससामान्याभिधाविशेषाभिधाशृंगारे
त्यादौत्याशंकते॥वाच्यमितिशेषः॥तथाचोक्तस्थलेबीभत्सस्यास्वाद्यत्वेतत्संचारिणीजुगुप्सैवशृंगारादेरास्वाद्यत्वेतत्संचारीरत्यादिरेव
प्रबुद्धमिथ्याज्ञानवासनाभिव्यक्तिंगतार्थयतीतिभावः॥स्थापितयानुभूयमानप्रबुद्धमिथ्याज्ञानवासनायाविद्युदुद्योतप्रायत्वात्तद्रस

अतएवनबीभत्सस्यापि॥नहास्यस्य॥तद्वैरिणः करुणस्यापितत्रसत्वात्॥अतएवनकरुणस्यापि॥नरौद्रस्य॥तद्वैरि
णोद्भुतस्यापितत्रसत्वात्॥अतएवनाद्भुतस्यापि॥नवीरस्य॥तद्वैरिणोभयानकस्यापितत्रसत्वात्॥अतएवनभयानकस्या
पि॥नापिशांतस्यतद्विरोधित्वात्॥नचसामान्यएवरसस्तद्विशेषादितरेभवंतीति॥शांतरसस्यतद्विरसाभावत्वापत्तेः॥किंतु
विकृतएव॥रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयास्तत्रोत्पद्यंतेविलीयंतेच॥तेनतत्रतेव्यभिचारिभावाइति॥ल
क्षणंचप्रबुद्धामिथ्याज्ञानवासनामायारसइति॥मिथ्याज्ञानमस्यस्थायिभावः॥ स्थायिभिरन्यथासिद्धोजगद्विषयहेयताबुद्धि

वासनायास्तथाविधायाअपितथाविधेनहर्षादिनान्यथासिद्धिःस्यात्तदिदमुक्तमेकत्ररसोत्पत्तिरपरत्रनेतिवक्तुमशक्यत्वादिति॥त
थाचशांतस्यरसविशेषतासर्वाभिमताविलीयेतेत्युत्तरयति॥तस्मान्मायारसोधिकएवरत्यादयस्तस्यव्यभिचारिणइत्युपसंहरति॥किंतु
तएव॥अतिरिक्तोविलक्षणएवरसइत्यर्थः॥विद्युतइवेतिपाठेननुमायारसस्थलेरत्यादिप्रतीतेःकागतिरतआहेतिकिंत्वित्यवतार
णीयं॥तेनोत्पादविलयाभ्यांविद्युत्प्रायत्वेन॥तंलक्षयति॥प्रबुद्धाफलिता॥मिथ्याज्ञानमित्यस्यमिथ्याज्ञानवासनेत्यर्थाल्लक्षणवाक्ये

नौका
रामः
८३

लाटीलाटदेशस्त्रीतस्याः दृगेवांभोरुहं गंधवहप्रेरितत्वात्तस्य रभसो वेगस्तेनांचल्यमिति यावत्तस्य कर्त्री फलपुष्पसमृद्धे रीदृशी वाटी वाटिका तिष्ठति कापि कांता मनोविश्रामहेतुः सरोजसारंगादिप्रतिपत्तेरीदृशी वापिका तिष्ठति तल्पं पर्यंकस्तद्रानुकल्पं कामिनी प्रकटयतीति योज्यं नैर्मल्यमार्दवादिसंपत्तेरेतेनोपभोगसाधनसंपत्तिकारकाद्दृश्यरूपोद्दीपनविभाव उक्तः॥ कामिनी कामनीतिं कामक्रीडां मिथः परस्परं प्रकटयति॥ एतावता षडिंद्रियजन्यनिर्वृतिलक्षणः शृंगाररूपो व्यभिचारी सूचितः॥ कामानुरूपं मनोभिलषितं रूपमाकृत्यादि कामिनी प्रकटयतीत्यन्वयः॥ एतेन कामिन्याद्यालंबुद्धिरूपमिथ्याज्ञानवासनाया आलंबनविभावो दर्शितः॥ अथोपादेयनामतिरूपमनु

विभावाः सांसारिकभोगार्जकधर्माधर्माः॥ अनुभावाः पुत्रकलत्रद्विजपसाम्राज्यादयः॥ यथा॥ वाटी लाटीदृगंभोरुहरभसकरी वापिका कापि कांता तल्पं चंद्रानुकल्पं प्रकटयति मिथः कामिनी कामनीतिं॥ रूपं कामानुरूपं मणिमयभवनं बंधुरं बंधुरागो लोके लोकेशकस्त्वमसि न भवने सर्वदा सर्वदाता॥

आवं दर्शयति मणिमयभवनं बंधुरमुन्नतानतं सुंदरं तु सेवनीयमिति यावत्॥ कृतमस्तीति शेषः॥ एतेन धनसंपत्तिरुक्ता॥ बंधुरागो बंधुजनप्रीतिः स्वयं संपादितास्तीति शेषः॥ एतेनाभिजनसंपत्तिरुक्ता॥ हे लोकेशालंकुरुपुंसो लोके सर्वदा भवने सर्वदातानास्मि तु त्रैलोक्ये विद्यमानानां सर्वेषामेव पुंसां यथाकालमनायासेनैव सर्वं दातासीत्यर्थः॥ अत्र यथोक्तविभावादिसंयोगादभिव्यज्यमानाकुत्सितनायकगता मिथ्याज्ञानवासनामायारस इति बोध्यं॥ न चात्र तु न हि प्रधान्येनाभिव्यज्यमानो भावो रसमपेक्षते॥ तथा सति रसस्यैव प्राधान्यापत्त्या भावध्वनिविलोपप्रसंगात्॥ तस्मात्स्वकस्वेस्यादिविकल्पानवकाशाद्व्यभिचारिणी रतिर्मायारसंगतार्थ्यपतीत्याहुः॥ तन्न॥ विभावानुभावव्यक्तस्यापि चर्वं

र.गं. णायाद्रवस्वातंत्र्येण तथाविधव्यभिचारिचर्वणाया अपि निरुक्तानंदांशावरणाज्ञाननिवर्तनसमर्थो लौकिकव्यापारफलोपधायकत्वक नौ.का

८४ ल्पने गौरवात्॥ प्रातिरसाभिव्यक्तेरभ्युपगमे तु कुप्रसामग्र्यैव निर्वाहात॥ परंतु पानकरसन्यायेन चर्व्यमाणत्वान्मनाभाव चमत्कारप्र

कर्षाद्भावध्वनिव्यवहार:॥ रसस्तु तत्र व्यज्यमानोपि न तथा चमत्कारहेतुरिति न रसध्वनिरेष:॥ अत एव वात्सल्यादीनां ते ते रसा: स

चार्यतया प्राग्दर्शिता:॥ रसे ह्यानंदांशाविनाभावस्य धर्मिग्राहकमानसिद्धत्वाच्चमत्काररहितरसव्यक्तौ मानाभाव इति तु विवादग्रस्तमे

वप्राचां॥ कथमन्यथा परमुखेरसमेते नु मन्यंते॥ तथाहि॥ अलंकारे चरुचिरे चित्तविश्रांतिकारिणि॥ अलंकारस्य मुख्यत्वं गौणत्वं रसभाव

योरिति॥ नस्मात्प्राचां मायारसो न पवार्य एवेति ग्रंथकृदाशय:॥ नास्त्यभिन्नेपरमिति॥ आदिकामेतिहासादौ त्विस्यर्थ:॥ नवमइति॥ नन्व

नास्त्यभिन्नेपरं निर्वेदस्थायिभावक: शांतोपि नवमो रसो भवति॥

शांतरसस्यातिरेके किं मानमिति चेत्॥ मुनिवचनं॥ तद्यथा॥ शृंगार: करुण: शांतो रौद्रो वीरोद्भुतस्तथा॥ हास्यो भयानकश्चैव बीभत्सश्चेति

ते नव इति॥ न टे शमाभावान्नात्येगीतवाद्यादीनां विषयत्वे मुख्यात्मकशांतरसविरोधिनां सत्त्वाच्च न तत्र शांतरससंभव इत्याशयेनाक्तंना

ट्यभिन्न इति॥ तदुक्तं॥ शांतस्य शमसाध्यत्वान्नटे च तदसंभवात्॥ अष्टावेव रसा नाट्येन शांतस्तत्र युज्यत इति॥ नव्यास्तु नटे शमाभावा

दितिहेतुरसंगत:॥ नटे रसाभिव्यक्तेरस्वीकारात्॥ सामाजिकानां च शमवत्त्वेन तेषां रसोद्बोधे बाधकाभावात्॥ न च नटस्य शमाभावात्तद

भिनयप्रकाशकत्वानुपपत्तिरितिवाच्यं॥ तस्य भयक्रोधादेरप्यभावेन तदभिनयप्रकाशकताया अप्यसंगत्यापत्ते:॥ यदि च नटस्य क्रोधादे पाम:

रभावेन वास्तवतत्कार्याणां वधबंधादीनामसंभवे पि कृत्रिमतत्कार्याणां शिक्षाभ्यासादितउत्पत्तौ न बाधकमस्तीति सूक्ष्मदर्शानिरी ८४

स्यतेन तदाप्रकृतेपितुल्यवदिदंज्योतिः कुतोहेतोस्तरलितमतिसूक्ष्मसात्त्विणोपि॥ नचनाट्येगीतवाद्यादीनांविरोधिनांसत्त्वात्तामाश्रि
केष्वपिविषयवैमुख्यात्मनः शांतस्यकषमुद्रेकइतिप्रागुक्तंशंक्यं॥ नाट्येशांतरसमभ्युपगच्छद्भिः फलबलाद्गीतवाद्यादेस्तस्मिन्विरो
धितायाअकल्पनात्॥ विषयचिंतासामान्यस्यतत्रविरोधित्वस्वीकारेतुतदीयालंबनस्यसंसारानित्यत्वस्यतदुद्दीपनस्यपुराणश्रव
णादेरपिविषयत्वेनविरोधितापत्तेः॥ अतएवसंगीतरत्नाकरेचरमाध्याये॥ अष्टावेवरसानाट्येष्विति केचिदचूचुदन्॥ तदचारुय
तः कंचिन्नरसंस्वदतेनट इत्यादिनानाट्येपिशांतरसोस्तीतिव्यवस्थापितमित्यन्यत्रविस्तरइतिप्राहुः॥ येरपिनाट्येशांतरसोनास्तीत्य
भ्युपगम्यतेतैरपिबाधकाभावान्महाभारतादिप्रबंधानांशांतरसप्रधानतयासकललोकानुभवसिद्धत्वाच्चकाव्येसोवश्यमंगीकर्तव्यस्त

निर्वेदस्यपरिपोषः शांतोरसः॥ दोषप्रशमोवादोषाः कामक्रोधादयः ॥

त्सिद्धंनः समीहितमित्येतदभिप्रायकमेवनाट्यभिन्नेपरमित्यत्रकाव्येशांतरसस्यनिर्विवादतासूचकंपरंपदमुपात्तं॥ अतएवाष्टौनाट्ये
रसाःस्मृतादृत्युपक्रम्यशांतोपिनवमोरसइतिमंमटभट्टाअप्युपसमहार्षुः॥ शांतंलसयति॥ नित्यानित्यवस्तुविचारजन्मनोविषयवि
रागाख्यस्यचित्तवृत्तिविशेषस्येत्यर्थः॥ असावेवालंप्रत्ययइत्युच्यते॥ अत्रैवविषयेष्वनित्यतामतिरूपंविषयदोषविचारंविभावंवक्ष्यति
॥ ननुनिरुक्तनिर्वेदस्यस्थायिभावत्वेशांतेनिखिलविषयपरिहारजन्यात्ममात्रविश्रामानंदप्रादुर्भावमयत्वानुभवविरोधः॥ उक्तंतु॥ यच्चका
मसुखंलोकेयच्चदिव्यंमहत्सुखं॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलामिति॥ अतएवसर्ववृत्तिविरामोस्यस्थायिभावइत्यपिनिरस्तं॥
अभावस्यस्थायित्वायोगाच्चेत्यभिप्रेत्याह॥ सर्वानुभवसाक्षिकः कामक्रोधादिरूपदोषापगमावस्थायामात्ममात्रविश्रामसंभूतानंदइत्य

स्त. ८५

तस्मान्निर्वेदस्य निरूक्तदोषप्रशमस्यवास्थायित्वमित्युक्तमतभेदेनैवोदाहरणभेदोवसेयः॥ इदंकुप्रसंपत्तिशालिहर्म्यगृहंहे यमस्थि
रत्वादेतेनविषयदोषबुद्धिरूप आलंबनविभावउक्तः॥ निकुंजभवनंश्रयमाश्रयणीयमेतेनौदासीन्यरूपोनुभावउक्तः॥ धनंप्रदेयं
रागहेयादिसाधनत्वेनानुपादेयत्वात्तीर्थपयः पेयमनायाससंपत्तेरेतेनहिताहितप्राप्तिपरिहारार्थक्रियाहानिरूपमनुभावांतरमुक्तं
रागहेत्वादिसाधनत्वेनानुपादेयत्वात् ... ॥भगवतः षड्विधैश्वर्यादिगुणशालिनः॥ तदुक्तं॥ ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसः श्रियः॥ ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणेति॥
हरेर्विष्णोः पदांभोरुहंगेयमेतेनमतिरूपव्यभिचारिभावः सूचितः॥ जन्मदर्भशयनेविरायनेयमेतेनतापसदर्शनमुद्दीपनमुक्तंमनोध

असत्वविषयदोषविचारविरक्त्यादयोविभावाअनुभावाआनंदाश्रुपुलकहर्षगद्गदवचनादयः॥ यथा॥ हेयंहर्म्यमिदंनिकुंज
भवनंश्रेयंप्रदेयंधनंपेयंतीर्थपयोहरेर्भगवतोगेयंपदांभोरुहं॥ नेयंजन्मविरायदर्भशयनेधर्मेनिधेयंमनःस्थेयंतत्रसिता
सितस्यसविधेध्येयंपुराणंमहः॥ यथावा॥ वेदस्याध्ययनंकृतंपरिचितंशास्त्रंपुराणंश्रुतंसर्वंव्यर्थमिदंपदंनकमलाकांतस्य
चेत्कीर्तितं॥ र्मेनिधेयमेतेनवेदांतश्रवणाद्युद्दीपनांतरमुक्तं॥ तत्रसितासितस्यगंगायमुनयोः संघातस्यसविधेप्रयागेस्थेयमेते
नतपोवनदर्शनाद्युद्दीपनांतरमुक्तं॥ पुराणंमहआत्मचैतन्यंध्येयमेतेननासाग्रदृष्टिरूपोनुभावोध्वनितइति॥ चेत्कमलाकांतस्यपदं
नकीर्तितंतर्हीदमध्ययनादिसर्वंव्यर्थंतज्जन्यफलस्यस्पृहायाविनाशादेतेननिरीहात्मिकाविरक्तिरालंबनविभावउक्तः॥ आनंदस्य
निर्विषयत्वेपिनहिशेषणप्रशमेसविषयकेक्वाप्रतियोगिकत्वादेवालंबनत्वमत्राध्यवसितमितिबोध्यं॥ वेदस्यस्वाध्यायस्याध्ययनंगुरु
मुखोच्चारणानूच्चारणमेतेनवेदांतश्रवणाद्युद्दीपनमुक्तं॥ शास्त्रंपरिचितमेतेनमननाद्युद्दीपनांतरमुक्तं॥ पुराणंश्रुतमेतेननैराग्यदार्ढ्य

नौका प्रतिपादनाय निपतकालिकत्वं फलवि षयारुचि बीजमुपन्यस्त॥ तत्र दृष्टांतः॥

राम: ८५

उत्खातं खनितं सदृशीकृतं समीकृतं भूयसा भसा सेको विरचितस्तत्सर्वं निष्फलं भवत्यालवालवलये यदि बीजं न क्षिप्तमेतेन मतिर्व्यभि
चारिभावो ध्वनित इति॥ इति श्रीजड्युपनामकगंगारामविरचितायां नौकाख्यायां रसतरंगिणीव्याख्यायां सप्तमस्तरंगः॥ दृष्टय
स्त्रिविधाः स्थायिभावजा व्यभिचारिभावजा रसजाश्चेति संगीतकशास्त्रानुसारात्स्थायिभावभेदनियतभेदाद्दृष्टीराह॥ ता उद्दिशति॥ व्य
भिचारिभावजा दृष्टीर्विभजते॥ ता उद्दिशति॥ यद्यपि त्रयस्त्रिंशद्भेदा व्यभिचारिभावास्तेषां दृष्टयः पञ्चविंशतिधेति यथायोगं विनियोगान्

उत्खातं सदृशीकृतं विरचितः सेकोंभसा भूयसा सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि॥ इति रसनिरूपणं नाम स
प्तमस्तरंगः॥ स्थायिभावजा दृष्टिरष्टधा॥ स्निग्धा हृष्टा दीना क्रुद्धा दृप्ता भीता जुगुप्सिता विस्मिता चेति॥ व्यभिचारिभावजा
दृष्टिर्विंशतिधा॥ शून्या मलिना श्रान्ता लज्जिता शंकिता मुकुलार्द्धमुकुला ग्लाना जिह्मा कुंचिता वितर्किताभितप्ता विष
ण्णा ललिताकेकरा विकोशा विभ्रान्ता विप्लुता त्रस्ता मदिरा चेति॥ रसभेदादष्टधा रसदृष्टिः॥ कान्ता हास्या करुणा रौद्री वी
रा भयानका बीभत्साद्भुता चेति षट्त्रिंशद्भेदा दृष्टयः॥ कूणिता विकसितार्द्धविकसिता चकिता सुप्ता घूर्णितालसा विवर्ति
ता पर्यस्ता शून्या स्तिमिता चेत्यादयो दृष्टिभेदा ऊहनीयाः॥

भवति तथापि यथा तासां नेत्रविनियोगस्तथा संगीतकशास्त्रे प्रतिपा
द्रविवर्तिता
दितं तत्र नातीवोपयुज्यत इति दिङ्मात्रेणेहोच्यते॥ यथा म्लाना दृष्टिर्ग्लानावपस्मारे च॥ यथा वा विकोशा मनोगर्वे स्मृतावुग्रतायां च॥
यथा वा विप्लुतोन्मादे दैन्ये चेत्यन्यत्र विस्तरः॥ रसभेदनियतभेदाद्दृष्टीराह॥ ता उद्दिशति॥ मतान्तरमाश्रित्याह॥ एवं स्त्रीपुरुषयोः प्रकृत्य
वस्थाभेदेनापि दृष्टिभेदास्त्वपरं त्वेवंविधभेदस्य स्वस्वानुभवमात्रवेद्यस्य सर्वसंवादाभावादानन्त्याच्च नासावुट्टंकितः॥ तदुक्तं॥ इत्युक्त

र॰ त॰ षट्त्रिंशत्किल नेत्राः स्युस्ताराभ्रुपुटकर्मणा॥ संदर्भादूलणाप्येताः प्रत्येकं वक्ष्यमाणमाद इति॥ संगीतकप्रसिद्धदृष्टिविशेषलक्षणानुसारे नौका
९६ णदृष्टिविशेषा उदाहरणीया इति विस्तरभियादिङ्मात्रमावेदयितुमशोकवनिकान्यायेन ललितामुदाहरति॥ तल्लक्षणं तु सभ्रूक्षेपस्मि
तापांगाकुंचिताभ्रुरोन्मुखी॥ ललिताललने प्रोक्ता दृष्टिर्मन्मथतारकेति॥ हे शशिमुखि कामदेवो वा भूषणं वा स्वयं धृतमदो वा भवनं वा यौव
नं वा ~~~~~ वयं वेत्स्यखिलमपि॥ अत्र प्रत्येकं कातार्थ्यद्योतकप्राधान्यप्रतिपादनाय सर्वत्र वाशब्दप्रयोगः॥ ते लोचनेन कृतार्थं भ
वति सकलनिरुक्तवस्त्वभिलषितार्थसंपत्तेः॥ कथंभूतेन लोचनेन वीचीति॥ वीचीनां विक्षेपः संघट्टनं तेन खेलच्चंचलपक्ष्मलं त

तत्र ललिता यथा॥ मनसिजनृपतिर्वा मंडनं वा मदो वा शशिमुखि भवनं वा यौवनं वा वयं वा॥ अखिलमपि कृतार्थं वीचि
विक्षेपखेलत्कमलविजयलीलाशालिना लोचनेन॥ ग्लाना यथा॥ पर्यस्तालककरो विषः श्रमजुषः प्रस्यंदगंडत्विषः शंभो
शीकरशीतलेन शशिना वातं समातन्वति॥ जीयास्तामचलाधिराजदुहितुर्निस्पंदनीलोत्पलच्छायानिद्रितचंचरीकमि
थुनस्पर्द्धासमृद्धे दृशौ॥ स्वविजयफलिकायालीलाशोभाविशेषस्तेन शालते तच्छीलेन स्येवंविधविशिष्टोपमानेन निरुक्तलक्ष

णलक्षितत्वमावेदितं॥ तथैव ग्लानामुदाहरति॥ तल्लक्षणं तु विनियोगपुरःसरमुक्तं संगीतके॥ अंतर्निविष्टतारा या मलिना मंदचारि
णी॥ विश्लथभ्रूपक्ष्मपुटा ग्लाना ग्लानौ नियोजयेदिति॥ तत्र प्रथमांतयच्छब्देन क्रियान्वयसाकांक्षस्य द्वितीयांतस्य तदो ध्याहारादन्व
यः संपद्यते॥ अचलानां पर्वतानामचलेषु वाधिराजः श्रेष्ठो हिमालयस्तस्य दुहितुः कन्यायाः दृशौ भ्रुपुटाकुंचितकनीनिके जीयास्तां सर्वोत्कृ रम॰
ष्टे भूयास्तां किंभूते दृशौ निस्पंदेति॥ निश्चलस्य नीलोत्पलस्य छायायां निद्रितस्य भ्रमरयुगलस्य स्पर्द्धया समृद्धे॥ एतेन लक्षणवाक्यघटकपु ९६

उत्तरार्द्धार्थं संगमयति सत्यं तं॥ शंभो शिवे सीकरैर्जलकणैः कृत्वा शीतलेन शिशिरीकृतेन स्वतः शीतलस्यापि न श्रमापनोदकत्वं श्रमबाहुल्या
दित्यपि ज्ञापकमिदं विशेषणं॥ शशिना चंद्रेण॥ शेखरशीतलेनेति पाठे चंद्रवच्छीतलेनेत्यर्थः॥ शशिनेत्यस्य चंद्राकारव्यंजनेनेत्यर्थः॥ वस्तु
तस्तु शेखरेणोत्तंसेनात एव स्वसमीपवर्तिनात एव चानुभूतश्रमहरणस्वभावेन गंगाजलेनेति निर्गलितोर्थः॥ वातं समातन्वनिसति॥
किंभूता या अचलाधिराजदुहितुः पर्यस्तेति॥ पर्यस्ता विकीर्णालकानां रोचिर्नाम दीप्तिर्यस्यास्तस्याः पुनः कीदृश्यास्तस्याः श्रमेति॥ विप
रीतरतगर्भादिप्रयुक्तश्रमभाजः॥ पुनः कीदृश्यास्तस्याः प्रस्यंदेति॥ अतिशयितकंपशालिनी गल्लशोभा यस्यास्तस्या इत्यर्थः॥ दिक्प्रदर्शन

एवमन्या अप्युदाहरणीयाः॥ अथ रसानां जन्यजनकभावः॥ तत्र भरतः॥ शृंगाराद्धि भवेद्धास्यो रौद्राच्च करुणो मतः॥ वीराच्चा
द्भुतोत्पत्तिर्बीभत्साच्च भयानकः॥ अयमुत्सर्गः परेषामपि रसानां कार्यकारणभावदर्शनात्॥ पूर्वग्रंथकारसंमतिरपि॥ क
थासंग्रहयोगाच्च विवक्षावशतः कवेः॥ अन्योन्यं जन्यजनका रसभावा भवंत्यमी॥ मात्रमेतदित्याह॥ तद्यथा मम॥ मृगयावेषबा

धप्रधावितमृगीविलक्षदृष्टिरिव॥ घनपटलं पश्यंत्यास्तस्या दृष्टिर्मया दृष्टा॥ तत्रैयं शंकिता दृष्टिः॥ तल्लक्षणं तु व्यामूढेवायता तिर्यङ्मुहु
श्चकिततारका॥ नातिस्थिरा निवृत्ता दूरं वीक्षणा बहिरुन्मुखी॥ शंकायां शंकिता दृष्टिर्नाट्यविद्भिरुदाहृतेति बोध्यं॥ प्रसंगादाह॥ रसा
नां स्थायिभावानां॥ रसानामखंडानंदमयत्वेन जन्यजनकभावासंभवात्॥ शृंगारादितिरतेरित्यादि बोध्यं॥ इतरपरिशेषमसहमान आ
ह॥ तत्र संमतिमाह॥ कथायां वर्णनीयस्येत्यादिः॥ संग्रहः संदर्भविशेषस्तस्य योगो घटना तस्मादित्यर्थः॥ एतेन कार्यकारणभावस्य स्वतः
संभवित्वं दर्शितं॥ कविप्रौढोक्तिनिष्पन्नत्वं दर्शयति॥ कवेरिति॥ विवक्षावशत इति योजना॥ रसभावा इति॥ रसा भावाश्चेत्यर्थः॥ व्याख्या

मातूरेणुका या उद्गारां प्रगुणीभूतां दृशावेवांभोरुहयुगलं जलप्रभवत्वात्तस्माद्गलंतीं स्रवंतीं लसदिति पाठे तत्र लसंतीं भासमानां नौका

र.त बाष्पधारां दृष्ट्वा तातस्य जमदग्नेर्वक्षःस्थलसंबंधिरुधिरचयं शोणितकूटं च प्रेक्ष्य क्रुध्यता क्रोधभाजा भार्गवेण परशुरामेण सहस्राजु

८७ नस्य दमनसमारंभे दलनोद्योगेन गंभीरं पट्टीयं तेन स्फूर्जंती यादोर्वल्लिस्तत्संबंधियद्धल्लीसकं नृत्यं तस्य सकलकलायाः कौशलस्य

सूत्रधारः प्रवर्तकाचार्यः कुठारो हस्तेन्यस्त इत्यर्थः॥ द्वितीयमुदाहरति॥ हे सुभग तवारिभटः प्रतिपक्षयोद्धा विपरीतेरतविधावधि

यथा॥ मातुर्दृष्ट्वा दृगंभोरुहयुगलगलद्बाष्पधारामुदारां तातस्य प्रेक्ष्य वक्षःस्थलरुधिरचयं क्रुध्यता भार्गवेण॥ हस्तेन्यस्तः
सहस्राजुनदमनसमारंभगंभीरवीर्यस्फूर्जद्दोर्वल्लिहल्लीसकसकलकलासूत्रधारः कुठारः॥ अत्र वीरं प्रति करुणबीभत्स
योः कारणता॥ यथा वा नातवचरणानां॥ कुरंगाक्ष्या वेणीं सुभगविपरीतेरतविधावधिस्कंधं दृष्ट्वा किमपि निपतंतीमरिभटः
॥अधिग्रीवं युष्मत्प्रचलकरवालव्यतिकरं स्मरन्नेवस्तब्धो विरमति परीरंभणरसात्॥ अत्र भयानकं प्रति शृंगारस्य कारण
ता॥ यथा वा॥ युधि कुपितकृतांतस्पंदनस्पर्द्धिनादं दिशि दिशि दशकंठस्यक्तवान्वारिदास्त्रं॥ तडिति जनकपुत्र्याः साम्यमाला
कमानस्त्यजति न पवनास्त्रं राघवः स्विन्नपाणिः॥

स्कंधमंसे किमपि किंचिदंशेन निपतंतीं कुरंगाक्ष्या हरिणलोचनाया वेणीं कुंतलजूटीं दृ
ष्ट्वा धिग्रीवं ग्रीवायां युष्मत्प्रचलकरवालव्यतिकरं भवदीयस्य प्रकंपनशालिनः करवालस्य खड्गस्य व्यतिकरं संबंधं स्मरन्नेव स्मरणसमका
लमेव स्तब्धः सन्परीरंभणरसादालिंगनावेशाद्विरमति निवर्तत इत्यर्थः॥ कविविवक्षा वैचित्र्यं दर्शयितुं प्रकारांतरेणोदाहरणांतरमाह॥ द राम:
शकंठाराननणो युधि संग्रामे कुपिते तिक्रुद्धे कालस्य चक्रघोषाधिकध्वनिवारिदास्त्रं दिशि दिशि त्यक्तवांस्तडिति वारिदप्रादुर्भूतसौदामि ८७

न्यां जनकपुत्र्याः सीतायाः साम्यं सादृश्यमालोकमानः साक्षात्कुर्वाणो राघवः स्विन्नपाणिः सन् पवनास्कंदं वापस्कंदं न त्यजतीत्यर्थः॥ एतेषां निरूपितरसानां॥ अंगांगिभावापन्नानामविरुद्धानामेकत्र समावेश इति यावत्॥ रससंकर इति॥ बहुविधालंकारसंपाते प्रभाविशेषेण वा नेकरससमेलने चमत्कारातिशयेन विभिन्नव्यवहारविषयत्वसंभावित्वादिति भावः॥ तथा चांगत्वप्रकारेण भासमानस्वस्यापीतरस्यापि कत्वतत्त्वं बोध्यं॥ लोकालपतीति॥ व्यक्तीभविष्यतिचेतदुपरि श्लात्॥ रससंकरव्यवहारवदृमशबलव्यवहारस्यापि विषयं दर्शयितुं भूमिकामारचयति॥ विरोध इति॥ द्विविधो विरोध इत्यर्थः॥ द्वैविध्यं च तद धिकरणानृनिलतज्ज्ञानप्रतिबद्धज्ञानकत्वभेदेन बोध्यं॥ नन्वयं विरोधः

अत्र शृंगारं प्रति वीरस्य कारणता॥ एतेषामंगांगिभावापन्नानां रससंकर इति नाम लोकालपति॥ रसानां मिथो विरोधोपि॥ तत्र भरतः॥ शृंगारबीभत्सरसौ तथा वीरभयानकौ॥ रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥ नैविरस इति वैरिरसस्य विभावानुभावव्यभिचारिभावा अपि रसहानिकरा इति तान् निवारयेत्॥ किं सर्वेषामेवाहोस्वित्केषांचिदेव॥ नाद्यः॥ दर्शित

रससंकरव्यवहारस्य निर्विषयत्वापत्तेरविरोधसमुच्चायकापि शब्दानर्थक्यापत्तेश्च॥ नांत्यः॥ यतस्ते के इत्याकांक्षायामुक्तकार्यकारणभावापन्नव्यतिरिक्तादिति परिशेषाद्धाव्यंनत्वनयुज्यते तथाभूतयोरपि शृंगाराद्भुतयोरविरोधात्तस्मात्केषामसौ भवतीति पर्यवसिताशंकायां यथायोर्ययोर्विरोधस्तान्विशिष्य दर्शयति॥ यद्यपि पंचमषष्ठयोर्लघुगुरुत्वस्यासात्रदृश्यते न तथापि गुरोर्लघुप्रयत्नोच्चारणेन लघुत्वमेवमन्यस्यान्यथोच्चारणेन्यथात्वमित्यभिप्रायान्नासंगतिः॥ हास्यकरुणाविति॥ कार्यीभूतहास्यविरोधिनः करुणस्य कारणीभूतशृंगारविरोधित्युक्तप्रायत्वेतिन स्थगुक्तिरितिमंतव्यं॥ अत एव करुणविप्रलंभारव्यरसांतरमाममनंति॥ विरोधप्रदर्शनस्य फलं दर्शयन्नन्यदपि प्रसंगादाह

र॰त॰ एवमग्रेपि॥तत्रफलीभूताकथने॥ब्रूयादिति॥असाधारणैर्विशेषणैर्नब्रूयादित्यर्थः॥नितांतंयौवनोन्मत्तागाढरक्तामहाहवे॥वसुंधरां नौका
८८ समालिंग्यशेरतेवीरतेरयइत्यादौसाधारणविशेषणमहिम्नाविरुद्धयोः शृंगारबीभत्सरसयोरभिव्यक्तावपितथाकथनस्यदोषत्वाभावे
नयथाश्रुतासंगतेः॥अत्रासहायत्वतात्पर्यकत्वात्स्वार्थकनविभावकमितिकनानज्ञारूस्याचव्यस्तानांविरोधित्वेउक्तेसमस्तविरोधोप्यो
विस्यायातइतिस्फुटयितुंवैरिरसइवेतिदृष्टांतीकृतमधस्तात्॥किंतर्हिसर्वथावैरिणएकत्रनिबंधोनकर्तव्यएवेत्याशंक्याकर्तव्यःपरं
तुविरोधंपरिहृत्येतिवक्तुमुपक्रमते॥अंगत्वानुपपस्यांगभावमापन्नस्यांगांतरेणांगिभावमापन्नस्यत्वंगेनविरोधएवनेतिविवक्षितमर्थं
सूचयितुमंगांगिभावानापन्नयोरित्युक्तं॥एकदेशेसतीति॥विरोधभंजकावच्छेदकैक्येसतीत्यर्थः॥देशपदेनकालस्याप्युपलक्षणात्॥क

तत्रप्राचीनसंमतिः॥नचवैरिरसंब्रूयाद्वैरिणोनविभावकं॥नानुभावंनसंचारिभावंचापिकदाचनेति॥किंत्वंगांगिभावा
नापन्नयोरेकदेशेसतिवैरंदेशभेदेसतिनवैरं॥वृक्षेकपिसंयोगतदभावयोरिव॥समयभेदेसत्यपिनवैरंभूतलेघटतदभा
वयोरिव॥ विदेकदेत्यपिपाठः नचैवंकालभेदेनविरोधपरिहारस्यानुदाहृतत्वाद्नोक्तिरितिवाच्यं॥वक्ष्यमाणदेशभेदोदाहरणए

वनानारसाःपाणपइत्यत्रनानाधयोनेहसइत्युहितपाठेतात्पर्यान्नानार्थेष्वाधीयंतेनियम्यंतइत्यादिश्चतदर्थोवहितैःकरणीयइतिदि
क्॥देशभेदेसतिदेशभेदेपिसति॥अपिनाधिकरणभेदपरिग्रहः॥नवैरमिति॥नाद्योविरोधइत्यर्थः॥समयभेदेसत्यपीति॥उदासीन
चर्वणाव्यवहितचर्वणाकत्वेपिसतीतियावत्॥इत्थंचप्रतिबंधकाभावःसंपद्यतइतिफलितार्थः॥नवैरमिति॥नहितीयोविरोधइत्यर्थः रामः
॥चिरंतनवासनारूपस्यापिनामधुनात्याप्यवृत्तितयाधुनिकविभिन्नकालावच्छेद्यत्वाभावेनयथाश्रुतासंगतेः॥नचोद्बोधविशिष्टस्यापिनभा ८८

स्येवसर्वदालौकिकस्यशृंगारस्यबीभत्सस्यवानुद्बोधादितिवाच्यं॥यत्रोदाहरणेतथाविधविभिन्नकालावच्छेद्यत्वप्रतीतिरास्तांतस्मिंस्त
या॥तदभिप्रेत्यैवदेशपदार्थोविरोधभंजकावच्छेदकत्वेनानुगतीकृत्यदर्शितोस्माभिः॥प्रकृतेतुतथाविधविभिन्नकालावच्छेद्यत्वाप्रती
त्यावक्ष्यमाणसमयभेदोदाहरणासंगत्यापत्तेर्दुर्वारत्वात्॥उक्तसमयभेदोदाहरणस्योहनीयत्वेवक्ष्यमाणोदाहरणस्योपलक्षितज्ञान
विरोधोदाहरणपरत्वेचसंदर्भासंगतेः॥नचैवंघटतदभावयोरितिदृष्टांतवैषम्यमितिवाच्यं॥अनायत्याप्रतीत्योरित्यस्यपूरणेनसामंज
स्यात्॥वर्तमानकालकचकरजदेशैक्यादुभयरूपोपिविरोधोपयेत्यर्थः॥असावन्वयमुखःश्लोकःस्पष्टार्थएव॥इत्थमन्यूनबलप्रति

वैरंयथा॥प्रियेणालिंग्यमानायाःप्रियायाःकुचकुंभयोः॥करजक्षतनिर्मुक्तंरुधिरंकुंकुमायते॥देशभेदेसतिविरोधाभा
वोयथा॥एकःसिंधुभुवःकरेविलुलितश्चक्रेद्वितीयःस्थितःकामध्वंसिनिकालकूटकवलक्लिष्टस्तृतीयोधृतः॥भूयःक्षीरनि
धेर्घनप्रमथनेसक्तश्चतुर्थस्तथापायासुःकमलापतेर्भगवतोनानारसाःपाणयः॥ कूलरसांगानांनिबंधोनकर्तव्योयतःप्रति

कूलांगप्रकृतपुष्टिंबाधेतसुंदोपसुंदन्यायेनवोभयोपहतिःस्यादितिप्रघट्टकार्थः॥वस्तुगत्याधिकरणभेदाभावेपिनिरुक्तदेशभेदविव
क्षामात्रेणापिविरोधपरिहारोभवतीतिदर्शयन्नाद्यविरोधपरिहारमुदाहरति॥कमलापतेर्लक्ष्मीकांतस्यभगवतोनारायणस्यनानारसाः
विभिन्नावच्छेदकावच्छिन्नतत्तत्स्थाय्यनुमापकविभिन्नचेष्टाभाजःपाणयःपायासुरेकोन्यतमःसिंधुभुवोलक्ष्म्याःकरेविलुलितःकंपमा
नोनिहितोद्वितीयस्तदन्यःकश्चिच्चक्रेस्थितस्तृतीयोद्वाभ्यांविलक्षणःकश्चित्कालकूटकवलक्लिष्टक्ष्वेडग्रासविह्वलेकामध्वंसिनिशिवे
धृतश्चतुर्थोनशिष्टस्तुभूयःपदेलोकानुकृतिंप्रकटयद्धाकालंकारकमेवक्षीरनिधेःसमुद्रस्यघनप्रमथनेइतरप्रयत्नानिष्पाद्येतस्यैवप्रकृष्ट

र॰ त॰ नानापाणिरूपावच्छेदकभेदादेकाधिकरणकत्वेनप्रसक्तस्याप्यविरोधस्याप्यभावइत्यर्थः॥कामरिपोर्महादेवस्यधनुर्भग्नंराज्यंपरि नोका
८८ हृतंस्वकंकाननेस्थितंत्रिशिरानिर्भिन्नःखरस्यपिशितंस्पृष्टंकपिलोलितालंकेशोद्दलितालंकावधूनांरुदितंचिरायबहुकालंश्रुतंवि
देहभूःसद्यनीताप्रापितानद्रामस्याखिलंकर्मलोकोत्तरमित्यर्थः॥विरुद्धयोरव्यवहितचर्वणाकत्वेनतथैवप्रसक्तस्यद्वितीयविरोधस्या
प्यभावइतिभावः॥नचकरुणशृंगारयोरव्यवहितचर्वणाकत्वाद्विरोधएवेतिशंक्यं॥तयोरधिकरणभेदात्॥नास्त्येवानयोर्विरोधइतितुय

अत्रशृंगाररौद्रकरुणाद्भुतरसानांविरोधाभावः॥समयभेदेनयथा॥भग्नंकामरिपोर्धनुःपरिहृतंराज्यंस्थितंकाननेनिर्भिन्न
स्त्रिशिराःखरस्यपिशितंस्पृष्टंकपिर्लोलितः॥लंकेशोद्दलितश्चिरायरुदितंलंकावधूनांश्रुतंनीतासद्यविदेहभूस्तदखिलंरा
मस्यलोकोत्तरं॥अत्राद्भुतशांतभयानकरौद्रबीभत्सहास्यवीरकरुणशृंगाराणांविरोधाभावः॥अंगांगिभावानापन्नानांरसा
नांनिवेशोयत्रसरसशबलइतिवेदितव्यं॥तस्याप्येतदेवोदाहरणं॥अंगयोर्वैरेपिनरसहानिर्भटयोर्वैरेप्रभोरिव॥यथा
॥सीतांसंस्मरयंवोविप्रचलकुवलयस्पर्द्धिचक्षुःक्षिपंतीसेनांसंवीक्ष्यरक्षःशरदलितवपुःशोणितासारसिक्ता ॥ ॥

थाश्रुतसूत्रानुरोधिनः॥अंगांगिभावानापन्नानामिति॥विरुद्धानामितियावत्॥एतदेव॥भग्नमित्याद्येव॥कालभेदेसतिपूर्वपूर्वोप
मर्दस्यापिसद्भावादितिभावः॥तथाचविरोधप्रकारेणाभासमानस्वस्यायीतरस्याधिकत्वंतत्त्वबोध्यं॥प्रकारांतरेणापिविरोधपरिहारंद
र्शयति॥नरसहानिरिति॥द्वयोःसमुच्चित्यप्रधानरसांगत्वानुपपत्तेरितिभावः॥रामेणवोविप्रचलकुवलयस्पर्द्धिचंचलंचक्षुःक्षिपंतींसीतां रामः
संस्मर्यरक्षसांशरैर्दलितानांविदारितानांवपुषांशोणितानामासारैर्धारासंपातैःसिक्तांसेनांसंवीक्ष्यक्रोधेनतत्कार्याविवेकादिनारुष्यतोगर्वि ८८

थुस्यदशमुखस्यनिपततांमुंडानांलाभात्प्रमोदेनहर्षेणक्रीडंत्याःकाल्याःकरालायाभ्रुकुट्याःसहचरीकौटिल्यान्निधननिदानत्वाच्च चापयष्टिःसंदधेइत्यर्थः॥अत्रकार्यशेषप्रतिपत्तयेकार्यानंतरभाव्युपमानतोक्ता॥तुल्यायुक्त्यांगांगिभावोपिविरोधभंजकइत्याह॥विरोधिनोरिति॥एतेनान्योन्यांगांगिभावापन्नयोर्नत्वन्यान्यांगांगिभावापन्नयोरित्युक्तं॥अविरोधिनोरितिपाठेतुएवंस्यादिः॥नरसहानिरिति।प्रधानरसंप्रतिगुणीभूतरसस्यांगत्वानुपपत्तेरितिभावः॥दशकंधरेणभौजंगमंवागिरिमयंवाजलदात्मकंवायद्देवशस्त्रममुमुचेविदेहतनयाविरहाकुलेनरामेणतत्सर्वंवह्निमयशस्त्रमिवव्यलोकिदृष्टमित्यर्थः॥अत्रभयानकेवीरस्यांगत्वादविरोधः॥ननुरसोद्विविधः

रामेणक्रोधदृप्यद्दशमुखनिपतन्मुंडलाभप्रमोदक्रीडत्कालीकरालभ्रुकुटिसहचरीसंदधेचापयष्टिः॥अत्रशृंगारबीभत्सयोर्विरोधेपिनरसहानिः॥एवमंगांगिभावापन्नयोर्विरोधिनोरेकत्रभावेपिनरसहानिः॥यथा॥भौजंगमंगिरिमयंजलदात्मकंवाशस्त्रंयद्देवममुमुचेदशकंधरेण॥सर्वंविदेहतनयाविरहाकुलेनरामेणवह्निमयशस्त्रमिवव्यलोकि॥ननुबीभत्सशृंगारयोःसहजंवैरंकृतोमधुनिपीयनिष्ठीवतांसंभोगदर्शनादितिचेत्॥सत्यं॥बीभत्सस्यजुगुप्सास्थायिभावः॥ स्वनिष्ठःपरनि

थश्चेत्युक्तंतत्रस्वयंमधुनिपीयनिष्ठीवतोःस्त्रीपुंसयोर्द्वयोरपिसंभोगदर्शनात्कथंशृंगारबीभत्सयोर्विरोधइत्याशंकते॥किमत्रतटस्थस्यबीभत्सेनविरोधःशृंगारिणोरेववातेनसहासावभिमतः॥नाद्योधिकरणभेदाद्विरोधप्रसरस्यैवाभावात्॥नांत्यः॥रागोत्कटस्यनान्यतरस्यापिजुगुप्सायाअभावादित्याशयेनोत्तरयति॥तटस्थस्येति॥एतेनरतिक्रोधोत्साहभयशोकविस्मयनिर्वेदेषुप्रागुदाहृतेषुयथालंबनाश्रययोःपृथक्प्रत्ययोनतथाहासेजुगुप्सायांचसर्वत्रक्वचिदालंबनस्यैवप्रतीतेः॥पद्यश्रोतुश्चरसास्वादाधिकरणत्वेनलौकिकहासजुगुप्साश्रय

नौका

र.त. तथा च तत्र विभावयोरालंबनाश्रयरूपयोः सम्यगप्रतीत्या कथं रसोद्बोधः स्यादिति परास्तं॥ तत्रापि तटस्थस्य तथाविधस्याक्षेप्य
९० त्वात्॥ तस्यानाक्षेपेपि श्रोतुः स्वकीयकांतावर्णनपद्यादिवरसोद्बोधबाधकाभावाच्चेत्यपि द्रष्टव्यं॥ देशभेदाद्यभावेपि द्वयोरेककाल
तास्त्येवेति पुनः शंकते॥ तथाप्यधिकरणभेदादिना निरुक्तस्थले विरोधवारणेपीत्यर्थः॥ बीभत्स इति सतीति शेषः॥ नेव तथा दृष्टमि
तिविप्रतिपन्नं प्रत्याह॥ यदपि शिवस्य हृदि विशालामुंडमाला वर्तते पाणिनेरकपालं नत्यजति चैलं रौरवं चर्म भवति तदपि गिरिसुता

सा च तद्दर्शनेन तटस्थस्य भवति न तु तयो रागोत्कः स्यादिति॥ ननु तथापि बीभत्से शृंगारो दृश्यते॥ तथा हि॥ यदपि हृदि वि
शालामुंडमाला न पाणिस्त्यजति नरकपालं रौरवं चर्म चैलं॥ तदपि गिरिसुतायाः पक्षपातः पुरारौ समुदयति विचित्रः कामि
नोः प्रेमबंध इत्यादाविति चेत्॥ सत्यं॥ निजभर्तुरधमेपि भूषणे भक्त्यतिशयेन पत्न्यास्तत्र जुगुप्सैव नावतरति जुगुप्सितत्वे
न प्रतीयमानमेव हि जुगुप्सोत्पादकं भवति॥ किंच प्रियसंबंधोपाधिकमधिकं तत्र प्रेमैवोत्पद्यते॥ तस्मात्स्थायिभावाभावाद्बी
भत्सस्तत्र न जायत इति॥ याः पार्वत्याः पुरारौ शिवे पक्षपातः प्रेमातिशयः समुदयत्यत एव कामिनोः प्रेमबंधो विचित्रो बाधकेना

प्यनपनोद्य इति प्रतीमः इत्यर्थः॥ नायके रागोत्कः स्यादिति नायकभूषणेपि भक्त्यतिशयान्न जुगुप्सेत्युत्तरितप्रायमेवेत्यभिप्रेत्याह॥
अधमेपि वस्तुतो जुगुप्सितत्वे सत्यपि॥ तत्र भर्तरि॥ जुगुप्सितत्वेन दोषदूषितत्वेन॥ जुगुप्साहेतुभूतस्य भूषणे जुगुप्सितत्वावगमस्य
प्रतिबंधकस्य भक्त्यतिशयस्य सत्तामुपपाद्य जुगुप्साविरोधिशृंगारसामग्रीसत्तां कैमुतिकन्यायेनोपपादयति॥ तत्र भूषणे॥ तस्मादिति राम:
।भर्तृभक्त्यतिशयेन भूषणे जुगुप्सितत्वावगमस्य हेतोरभावादित्यर्थः॥ स्थायिभावाभावादिति, भूषणे जुगुप्साव्यंजकत्वाभावात् ॥ ९०

यद्यप्यत्र प्रकरणे रसशब्देन स्थायिभावमात्रं गृह्यते ऽखंडानंदमयस्य विरोधासंभवादित्युक्तप्रायमेव तथाप्येकतरबाधेनैकतरस्त
त्र कोऽनुमंतव्य इति जिज्ञासुं प्रत्येतदुत्तरमित्यवधेयं ॥ वीरभयानकयो रौद्राद्भुतयोश्च विरोधे शंकते ॥ एकस्य संभृतसामग्रीकत्वे तदित
रस्याधीनभवत्स्येवेति समाधत्ते ॥ रसावेशाद्रागोत्कर्षात् ॥ द्वयोरनयोः स्थायिभावयोरेकाधिकरणे समुपलंभेप्यधिकरणभेद इव
विषयभेदोपि विरोधभंजको भवतीति प्रतिपादयति ॥ विषयभेदमेवाह ॥ रौद्राद्भुतयोर्विषयभेदमुपपादयति ॥ वैरिरसं वारयेदिति
प्रागुक्तं ॥ उदाहृते चांगयोरंगांगिनोर्वा नैरंतर्यमेतदित्याशंक्य न त्वप्रबलैर्विरोधिनो रसस्यांगैर्यथा विद्यमानेष्वपि स्वांगेषु प्रकृतरसाभि

ननु वीरस्य युधि गच्छतः सर्पस्पर्शे चकितता दृश्यते ॥ रौद्रे चाकस्मिकोत्पातातिपाते विस्मय इति चेत् ॥ चकितता विस्मयश्च
तत्र रसावेशान्न भवत्येव ॥ सति वा विषयभेदः ॥ वीरस्य न प्रतिभटाद्भयं किंतु भुजंगमात् ॥ रौद्रे च न प्रतिबलबलाधिक्ये विस्म
यः ॥ किंतूत्पाते ॥ रसवैरस्योत्पादकमखिलमवधेयं ॥ व्यक्तेः प्रतिबंधो वापकर्षो वा स्यात्तथा वचनं न कार्यमित्येवाभिप्रेतं न तु सर्वथै

व विरोधिरसप्रतिपादकं न वाच्यमिति नियमः ॥ वैरिनिजयकृतवर्णयशोभाधायकस्य बाध्यत्वेन विरोधिरसनिबंधनस्य प्रकृतं रसं परिपो
षकवीनामत्यंतोपादेयत्वादित्याह ॥ केचित्तु विरुद्धा रसा येषां ते विरसास्तेषां भावो वैरस्यं विरुद्धारस इति फलितोर्थः ॥ तथा च प्रकृतर
सविरुद्धरसव्यंजकं निरसनीयमित्याहुः ॥ तन्न ॥ वैरिरसद्वेत्यादिना पौनरुक्त्यापत्तेः ॥ पूर्ववदित्यर्थकतथेत्युक्तान्यार्थकान्यत्वेति चसं
दर्भासंगतेश्च ॥ अन्ये तु वैरस्यं नाम पानकपाने सिकतापातेनेवारुंतुदतेति तद्वत्तु वचनादिवैरस्यमित्याहुः ॥ तदपि न ॥ वक्ष्यमाणानौचित्येनग
तार्थत्वात् ॥ किंतु रसस्य वैरं प्रतिबंधो वापकर्षो वा तस्य नित्युत्पत्त्योपदर्शिनार्थकमेव ॥ अखिलं न तूक्तमात्रं ॥ अनवधेयं विरुद्धरसवन्निरसनी

यत्नेन द्रष्टव्यं ॥ अखिलपदार्थं विवेचयितुं तत्र समतिमाह ॥

र.त. अनौचित्यस्यस्य साक्षाद्देव रसदोषता न परं परकीयविभावादिवृत्तरसमुखनिरीक्षकृतयेत्याविष्कृतं सर्वथेति॥ अवश्यमेव न तु य नौका
९२ त्किंचिदेव प्रकारविशेषविशिष्टमेवेत्यर्थः॥ तेन व्यभिचारिणां पदवाच्यत्वं न सर्वदोषः॥ यत्रेतरव्यावृत्तो नानुभावस्तत्र तस्याद्दो
षत्वादिस्यपि सूचितं॥ तदुक्तं॥ न दोषः स्वपदेनोक्तावपि संचारिणः क्वचिदिति॥ तत्र रसप्रातिकूल्यमन्वयव्यतिरेकाभ्यां प्राचीनग्रंथ
कृदुक्ताभ्यां द्रढयितुमाह॥ कुतो नौचित्यं परिहरणीयमित्याशंक्याह॥ यतः पानके सिकतासंपातद्रवत्वरुंतुदतासंपादकमित्यर्थः॥ अनौ
चित्यमौचित्यविपर्ययस्तत्र किमौचित्यं॥ धर्मशास्त्रानिषिद्धत्वस्य तथात्वे त्वन्यविवाहितायाः शृंगारेप्यनौचित्यापत्तेः॥ न चेष्टापति
॥ तत्र चित्तद्रुत्युत्कर्षस्यैव सकलसहृदयसंमतत्वादत एव वक्ष्यति॥ द्वयोर्यूनोरिति॥ अत्रेष्टापत्तिं चेदमंस्यत्तर्हि दंपत्योरित्येवोप

तत्र प्राचीनग्रंथकृतः॥ अनौचित्यादृते नान्यद्रसभंगस्य कारणं॥ प्रसिद्धौचित्यबंधस्तु रसस्योपनिषत्परेति॥ उद्वेगकर
मनौचित्यं॥ लोकयात्राप्रसिद्धिसिद्धत्वमौचित्यं॥ तस्माद्द्वयोर्यूनोर्यत्र मिथो रतिस्तत्रैव रसः॥ समहरिष्यदनस्तदाह॥ लो

कयात्रेति॥ लोकव्यवहारेत्यर्थः॥ प्रसिद्धिर्ज्ञानं॥ सिद्धत्वं विषयता॥ तथा च सार्वजनीनतादृशव्यवहारजन्यज्ञानविशेष्यत्वं तदिति
फलितं॥ लोकमात्रप्रसिद्धेति क्वचित्पाठः॥ तत्र मात्रपदं कृत्स्नार्थकमिति प्रसिद्धिपर्यंतेन प्रमापर्यंतविवक्षणात्तत्प्रमाविशेष्यत्वं तत
रिति फलितं बोध्यं॥ स्त्रीपुंसयोः परस्परानुरागवर्णने ब्राह्मणस्याध्ययनादिवर्णने राज्ञो मृगयावर्णनेपि चौचित्यं तद्विपर्ययश्चानौचित्य रामः
मित्यादिरीत्या वा बहुविधं तदित्याविष्कृतं विवक्षितार्थमाह॥ यूनोरिति पुमान्स्त्रियेत्येकशेषतात्पर्यं ग्राहयितुं द्वयोरिति मिथुनीभूत ९२
योरित्यर्थः॥ जरास्वपि मान्मथो विकारोऽनुचित एवेति ध्वनयितुं यूनोरित्युक्तम्॥ तत्रैवेत्येवकारव्यवच्छेद्यमाह ॥ ७ ॥ ७ ॥

युक्तितोल्यादाह॥अन्नोभयत्रापिस्वविषयावृत्तिस्वाश्रयविषयकरतिकत्वंकैवल्यंषष्ठीसमभिव्याहृतैवकारार्थः॥तेन॥यांचिंतया
मिसततंमपिसाविरक्तासाचान्यमिच्छतिजनंसजनोन्यसक्तः॥अस्मत्कृतेचपरितुष्यतिकाचिदन्यापिक्ताचतंचमदनंचइमांच
मांचेत्यादौस्वविषयेस्वाश्रयान्यविषयरतिमत्वेपिरसाभासतानिष्प्रत्यूहैवेतिध्येयं॥रसाभासएवनतुरसइत्युभयत्रापिप्रथमासम
भिव्याहृतैवकारार्थः॥एतेनदूषकताबीजस्यैकरूपस्यैवनिरुक्तकैवल्यस्यसंभवादुदाहरणभेदप्रयोजकवैचित्र्यांतरगवेषणपरि
श्रमोनकर्तव्यइतिसूचितं॥कामोनिशयितत्वाद्रामोवातदेकप्रयोजनत्वात्सीतेत्यादिसीतासमागमस्ययोग्यतासिद्ध्यर्थंबंधुरंन

एकस्यैवरतिश्चेद्रसाभासएव॥एकस्याएवरतिश्चेद्रसाभासएव॥क्रमेणोदाहरणं॥सीतासमागमश्लाघाबंधुरंदश
कंधरं॥प्रहर्तुंसमतेकामोरामोवानिशितैःशरैः॥निधुवनवनप्रांतेयांतंचलैर्नयनांचलैः किमितिवलितग्रीवंमुग्धेमुहु
मुहुरीक्षसे॥ विफलमखिलंयूनोर्नोचेदुदेतिपरस्परंरतिरथमनोजन्मादेवःसएवनिषेव्यतां॥ मं विनीतमितियावद्द

शकंधरंनिशितैरुद्दीपनातिशयमुक्तैस्तीक्ष्णैश्चशरैःपुष्पैर्बाणैश्चप्रहर्तुंमारयितुंसमतेसमर्थोभवतीत्यर्थः॥हेमुग्धेसंभृतवि
नष्टानुरागानुभिन्नेनिधुवनेत्यादि॥सुरतप्रधानवनसमीपेयांतं॥युवानमित्यर्थादितिकेचित्॥तन्न॥तथासतिबहुविषयरति
प्रतीत्याप्रकृतोदाहरणासंगतेः॥किंतुमामेनमित्याद्येकतरमर्थांचलैर्लज्जालोलैर्नयनांचलैःपक्ष्मभिर्वलितग्रीवंतिर्यग्विवर्तित
कंठंयथास्यात्तथाकिमितिकिमुद्दिश्यमुहुर्मुहुरीक्षसेयूनोःपरस्परंरतिश्चेन्नोदेतितर्ह्यखिलमीक्षणादिविफलंभवति॥अथेतिप
क्षान्तरइत्यर्थः॥द्वयोरप्यनुरागइतियावत्सईदृशादेरुद्देश्यामनोजन्मादेवःकामएवनिषेव्यतांतन्मतसिद्धार्थानुष्ठानस्यैवनलेवारू

पद्यालिंमनगं ... टीका ॥

र.त. अनौचित्यस्य साक्षादेव रसदोषतां न परं परकीयविभावादिवत्सरमुखनिरीक्ष्य कृतयेत्याविष्कर्तुं सर्वथेति॥ अवश्यमेव न तु य नौका
९२ त्किंचिदेव प्रकारविशेषविशिष्टमेवेवेत्यर्थः॥ तेन व्यभिचारिणां पदवाच्यत्वं न सर्वत्र दोषः॥ यत्रेतरव्यावृत्तो नानुभावस्तत्र तस्यादो
षत्वादित्यपि सूचितं॥ तदुक्तं॥ न दोषः स्वपदेनोक्तावपि संचारिणः क्वचिदिति॥ तत्र रसप्रातिकूल्यमन्वयव्यतिरेकाभ्यां प्राचीनग्रंथ
कृदुक्ताभ्यां दृढयितुमाह॥ कुतोनौचित्यं परिहरणीयमित्याशंक्याह॥ यतः पानके सिकतासंपातइवारुंतुदतासंपादकमित्यर्थः॥ अनौ
चित्यमौचित्यविपर्ययस्तत्र किमौचित्यं॥ धर्मशास्त्रानिषिद्धत्वस्य तथात्वे त्वन्यविवाहितायाः शृंगारेप्यनौचित्यापत्तेः॥ न चेष्टापत्ति
॥ तत्र चित्तद्रुत्युत्कर्षस्यैव सकलसहृदयसंमतत्वादत एव वक्ष्यति॥ द्वयोर्यूनोरिति॥ अत्रेष्टापत्तिं चेद्धर्मस्य तर्हि दंपत्योरित्येवोप

तत्र प्राचीनग्रंथकृतः॥ अनौचित्यादृते नान्यद्रसभंगस्य कारणं॥ प्रसिद्धौचित्यबंधस्तु रसस्योपनिषत्परेति॥ उद्वेगकर
मनौचित्यं॥ लोकयात्राप्रसिद्धिसिद्धत्वमौचित्यं॥ तस्माद्द्वयोर्यूनोर्यत्र मिथो रतिस्तत्रैव रसः॥ समहरिष्यदनस्तदाह॥ लो

कयात्रेति॥ लोकव्यवहारेत्यर्थः॥ प्रसिद्धिर्ज्ञानं॥ सिद्धत्वं विषयता॥ तथा च सार्वजनीनतादृशव्यवहारजन्यज्ञानविशेष्यत्वं तदिति
फलितं॥ लोकमात्रप्रसिद्धौ इति क्वचित्पाठः॥ तत्र मात्रपदं कृत्स्नार्थकमिति प्रसिद्धिपर्यंतेन प्रमापर्यंतविवक्षणात्तत्प्रमाविशेष्यत्वं त
दिति फलितं बोध्यं॥ स्त्रीपुंसयोः परस्परानुरागवर्णने ब्राह्मणस्याध्ययनादिवर्णने राज्ञो मृगयावर्णनेपि चौचित्यं तद्विपर्यये चानौचित्य
मित्यादिरीत्या बाबहुविधं तदित्याविष्कुर्वन्विवक्षितार्थमाह॥ यूनोरिति पुमान्स्त्रियेत्येकशेषतात्पर्यं ग्राहयितुं द्वयोरिति मिथुनीभूत रामः
योरित्यर्थः॥ जरास्वपि मान्मथो विकारोनुचित एवेति ध्वनयितुं यूनोरित्युक्तम्॥ तत्रैवेत्येवकारव्यवच्छेद्यमाह ॥ ७ ॥ ७ ॥ ९२

तिकत्वंकैवल्यंषष्ठीसमभिव्याहृतैवकारार्थः॥ तेन॥ यांचिंतय
युक्तितोत्यादाहु॥ अन्नोभयत्रापिस्वविषयावृत्तिस्वाश्रयविषयकरतिकत्वंकैवल्यंषष्ठीसमभिव्याहृतैवकारार्थः॥ तेन॥ यांचिंतय
मिसततंमयिसाविरक्तासाचान्यमिच्छतिजनंसजनोन्यसक्तः॥ अस्मत्कृतेचपरितुष्यतिकाचिदन्याधिक्तांचतंचमदनंचइमांच
मांचेत्यादौस्वविषयेस्वाश्रयान्यविषयरतिमत्वेपिरसाभासतानिष्प्रत्यूहैवेतिध्येयं॥ रसाभासएवनतुरसइत्युभयत्रापिप्रथमासम
भिव्याहृतैवकारार्थः॥ एतेनदूषकताबीजस्यैकरूपस्यैवनिरुक्तकैवल्यस्यसंभवादुदाहरणभेदप्रयोजकवैचित्र्यांतरगवेषणपरि
श्रमोनकर्तव्यइतिसूचितं॥ कामोतिशयितत्वाद्रामावातदेकप्रयोजनत्वात्सीतेत्यादिसीतासमागमस्ययोग्यतासिद्ध्यर्थंबंधुरंन

एकस्यैवरतिश्चेद्रसाभासएव॥ एकस्याएवरतिश्चेद्रसाभासएव॥ क्रमेणोदाहरणं॥ सीतासमागमश्लाघावंधुरंदश
कंधरं॥ प्रहर्तुंसमतेकामोरामोवानिशितैःशरैः॥ निधुवनवनप्रांतेयांतंचलैर्नयनांचलैः किमितिवलितग्रीवंमुग्धेमुहु
र्मुहुरीक्षसे॥ विफलमखिलंयूनोर्नोचेदुदेतिपरस्परंरतिरथमनोजन्मादेवःसएवनिषेव्यतां॥ मंविनीतमितियावद्

शकंधरंनिशितैरुद्दीपनातिशयमुक्तैस्तीक्ष्णैश्चशरैःपुष्पैर्बाणैश्चप्रहर्तुंमारयितुंसमतेसमर्थोभवतीत्यर्थः॥ हेमुग्धेसंभृतवि
नष्टानुरागानुभिज्ञेनिधुवनेत्यादि॥ सुरतप्रधानवनसमीपेयांतं॥ युवानमित्यर्थादितिकेचित्॥ तन्न॥ तथासतिबहुविषयरति
प्रतीत्याप्रकृतोदाहरणासंगतेः॥ किंतुमामेनमित्याद्येकतरमर्थाच्चलैर्लज्जालोलैर्नयनांचलैःपक्ष्मभिर्वलितग्रीवंतिर्यग्विवर्तित
कंठंयथास्यात्तथाकिमितिकिमुद्दिश्यमुहुर्मुहुरीक्षसेयूनोःपरस्परंरतिश्चेन्नोदेतितर्ह्यखिलमीक्षणादिविफलंभवति॥ अथेतिप
क्षांतरइत्यर्थः॥ द्वयोरप्यनुरागइतियावत्सर्वईक्षणादेरुद्देश्यामनोजन्मादेवःकामएवनिषेव्यतांतन्मतसिद्धार्थानुष्ठानस्यैवतत्सेवारू

र.त. तथा च नस्यानुरागे स्वत एव प्रवृत्तत्वादीक्षणावसर एव न॥ अनुरागाभावे त्वीक्षणवैयर्थ्यमुक्तमेव॥ न चास्मदीक्षणेनैवानुरागउ नौका
९३ ज्जीविष्यतीत्याशंसनीयं॥ प्रशमेन वासनाया एवात्यन्तोच्छेदादिति भावः॥ यद्वा वासनाया अत्यन्तोच्छेदमेव दर्शयति॥ अथेति षिद्धे
प्याचीर्णे सति सानादिप्रवाहो मनोजन्मा मनोधानस्थितिर्देव उद्दिष्टकर्मफलप्रसूर्निषेव्यतामेव विषयसिद्धिस्तु दूरापास्तैव॥ प्रत्यु
तां विरक्तेशनिर्विण्णायास्तथापि वासनाक्षणक्षीणा सर्वस्यामवगच्छामहे इत्याशयः॥ आशंसावचनविभक्तिसमभिव्याहारात्॥ प्रा
ग्रावणस्यैवानुरागो न सीताया इति प्रकाश एव प्रकृते नायको विरक्तो नायिका चानुरक्तेति तु विचारगम्यमिति न द्विवचयति॥ निरु

अत्र नायिकाया एव रतिर्न तु नायकस्य॥ एवमेकस्यानेकविषया रती रसाभास एव॥ परं त्वेष विशेषः॥ यस्य व्यवस्थि
ता बह्वी नायिका भवंति तत्र न रसाभासस्तथा सति कृत्स्नसकलोत्तमनायकस्य बहुकामिनीविषयाया रतेराभासता
पत्तेः॥ तस्माद्व्यवस्थितबहुकामिनीकवैशिकनायकपरमेतत्॥ ककेवल्याभावेप्यन्यतरस्यानेकालंबनरतिमत्वेपि रसा

भास एवेत्याह॥ आलंबनस्याव्यवस्थितत्वं विशेषणं दातुमुपक्रमते॥ अनौचित्याभावेनेष्टापत्तिर्न संभवतीति भावः॥ वैशिकेति॥ वे
श्योपभोगरसिक इत्यर्थः॥ यद्यपि सुप्रसिद्धतया वेश्यानां रसाभासः प्रथमं दर्शयितुमुचितस्तथापि यदेव रतेर्बहुविषयकत्वेनाभासत्वं
बुद्धावारूढं तदेवानेकपत्नीविषयकरतेराभासताप्रसंगोपीत्यव्यवस्थितानेकविषयत्वेनाभासत्वे परिकरणीये स्त्रीणामनेकविषया
रतिराभासो न पुरुषाणामिति विप्रतिपन्नस्य वैशिकरत्वेति प्रसंगशंकापरिजिहीर्षुणा तदृश्यलक्ष्यलाभावप्रसूत्यादनायस एव प्रथ रा.भः
मं लक्ष्यत्वेनापि प्रदर्शितः॥ अत एवोत्सर्गिकीं रीतिमनुरुंधानः प्रसिद्धिक्रमेणैवोदाजहारेति विदुषां परामर्शः॥ ७॥ ७॥ ९२

नायकेप्यव्यवस्थितत्वंविशेषणमावश्यकमन्यथापांचाल्याःपंचविषयकशृंगारादिवर्णनेप्याभासतायाःकस्याप्यनभिमतायाःसम्मा
पत्तेरितिस्फुटयन्निरुक्तार्थंप्राचीनसंमतिमाह॥ वैशिकानामित्यनेननायिकायामव्यवस्थितत्वंदृढीकृतं॥ वेश्यानामित्यनेननाय
केप्यव्यवस्थितत्वंदृढीकृतं॥ हेसखियस्पुरोयदग्रेनेत्रताराकनीनकातरलितासाभिलाषवलितातस्यकस्यसंपत्ताराभवति॥ यद्वासंप
द्विषयसंपत्तारारूपतयापरिणमतेफलितेतिपान्वयः यदभिमुखगतारत्नकांचीवेपतेहर्षोद्गमात्तेनकेनाद्यकांचीपुरीदृष्टादर्शनाविनाभूत
फलसंपत्तेः॥ यदनुगमेयन्निमित्तंकस्मिंहिशिष्यानिर्वचनीयउग्रातिशायिनोतएवाभितापऔत्सुक्यात्तस्यकस्याद्योग्रःसदाशिवस्तुष्टे

अतएववैशिकानांवेश्यानांचरसाभासइतिप्राचीनमतं॥ एकस्याअनेकविषयारतिर्यथा॥ संपत्कस्याद्यताराभवति
तरलितायत्पुरोनेत्रतारादृष्टाकेनाद्यकांचीयदभिमुखगतावेपतेरत्नकांची॥ उग्रःकस्याद्यतुष्टःसविषयदनुगमेकस्मि
दुग्रोभितापःस्नातःकेनाद्यवेणीपयसिविलुलितायत्कृतेकापिवेणी॥ अत्रकिमोबाहुल्येनवेश्यात्वं॥ एकस्यानेकविषयार
तिर्यथा॥ पंचेषुक्षितिपप्रतापलहरीभीतिस्तदीयापुनःकासांनस्तनकांचनाचलतटेकाश्मीरपंकायते॥ यत्कृतेयदर्थेकापिवे

णीविलुलिताकंपात्तेनकेनाद्यवेणीपयसिस्नातमित्यर्थः॥ संपत्तुष्टादिपदसाकांक्षषष्ठ्यंतकिमःस्नातदृष्टादिपदनिराकांक्षत्वेनषष्ठी
तृतीयाभेदभिन्नकिमद्वयावश्यकत्वेपिषष्ठ्यंतद्वयंतृतीयांतद्वयमितिकिम्बहुलोपादानंकम्बुभितवक्तृजिज्ञासाद्वयंविनानुपपन्न
तस्मानेकत्वंगमयतीत्युदाहरणसंगतिरित्याह॥ प्रियाभिलषितार्थपरायणातएवसखेःप्रतार्यपंचेषोःपंचम्योयस्यकस्यापिभूतपंचक
तादात्म्यप्रतिपन्नयमरणायेतियावदिषवोबाणायस्यतस्यातएवक्षितिपस्यराज्ञःकामस्यप्रतापस्यपौरुषस्यलहर्युज्जृंभणारूपातदीया

र.त. प्रकृतं पुंसः प्रीतिः पुनस्त्वर्थे कासां स्त्रीणां स्तनात्मनः कांचनाचलस्य सुमेरोर्गौरत्वादभ्युन्नतत्वाच्च तटे प्रावारेण काश्मीरपंकायते य नौका.
९४ स्य कर्दमाद्यात्मना परिणमते यक्षकर्दमश्च कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दम इति कोशोक्तः॥ कासां वा नीरजदृशां मूर्धनि नैव
सिंदूरलेखायते तदात्मना परिणमते॥ कासां वा कर्णयोर्न च माणिक्यभूषायते माणिक्यघटितभूषणात्मना परिणमते॥ अपि तु स
र्वास्वेव तेऽसौ प्रीतिकार्येस्तदीया प्रीतिर्व्यज्यते वृत्तिनायकनमस्स विवंनायिकालोभ पितारं प्रत्युक्तिरियं॥ सौलभ्यार्थैकैवकारोपसंदा
नेन किमाहितेनापीत्यर्थः सूचितः॥ अत्रेदं बोध्यं॥ कलहशीलकुपुत्राद्यालंबनतया वीतरागादिनिष्ठतया च वर्ण्यमानः शोको ब्रह्म
विद्यानधिकारिचांडालादिगतत्वेन च निर्वेदः कदर्यकातरादिगतत्वेन क्रोधः पित्राद्यालंबनकत्वेनोत्साह ऐंद्रजालिकाद्यालंबनत्वेन

कासां मूर्धनि नैव पंकजदृशां सिंदूरलेखायते कासां वा न च कर्णयोः प्रियसखे माणिक्यभूषायते॥ अत्रापि वैशिकताया
म्वदेव॥ यत्र रसा बहवः स रसशबलः॥ यत्र भावा बहवः स भावशबलः॥

च विस्मयः गुर्वाद्यालंबनतया च हासो महावीरग
तत्वेन वर्ण्यमानं भयं यज्ञीयपशुवसासृङ्मांसाद्यालंबनतया वर्ण्यमाना जुगुप्सा च रसाभासः॥ भावाभासेष्वप्येषैव रीतिरनुसर्तव्येति
दिक्॥ रसशबलदृष्टांतेन भावशबलत्वं कुर्वन् रसशबलमनुवदति॥ भावशबलत्वं लक्षयति॥ सत्तम्याकाव्यजन्यचमत्कृतिजनकैकज्ञा
नगोचरत्वं लभ्यते॥ तथा च तत्वे सत्यनेकभावत्वं तल्लक्षणं बोध्यं॥ न च विरुद्धांगेन प्रतिबंधात्कथं विरुद्धभावाभिव्यक्तिरन्यथा रस
शबलस्य दुर्वचत्वादिति वाच्यं॥ आनुभाविकरसानभिव्यक्त्याऽलौकिकाभिव्यक्तिं प्रत्येव तद्विरोधित्वात्॥ स्वाभिव्यंजकचर्वणाव्यवहि राम:
तचर्वणाकत्वान्न प्रतिबंधसंभावनेत्यपि वदंति॥ अत्र निर्वेदादयस्त्रयस्त्रिंशद्भावादिविषयारतिश्चभावपदार्थः॥ बहव इति ॥ ९४

अत्रपूर्वपूर्वोपमर्दनेननिबध्यंतइतिशेषइतिकेचित्तन्न॥पश्येत्कश्चिच्चलचपलरेकात्वराहंकुमारीहस्तालंबंवितरहहहाव्युत्क्रमः
क्वासियासि॥इत्थंपृथ्वीपरिवृढभवद्विद्विषोरण्यवृत्तेःकन्याकाचित्फलकिसलयान्याददानाभिधत्तइत्यत्रशंकासूयाधृतिस्मृति
श्रमदैन्यमत्यौत्सुक्यानामुपमर्दलेशशून्यत्वेपिशबलतायाराजस्तुतिगुणत्वेनपंचमोल्लासेमम्मटभट्टैरभिधानात्॥एतेनपरस्परसामा
नाधिकरण्येनचर्व्यमाणभावत्वंशबलत्वेसैवंविधःपरसंदर्भसोदस्समपरिष्कारोपिपरास्तः॥एकस्यामनेकेषांप्रतीतावप्येकस्याश्रये
परस्याश्रितत्वरूपस्यापिपरस्परसामानाधिकरण्यस्यप्रकृतेप्रतीतेः॥यदिचतत्स्वस्यायनार्थंपश्येत्कश्चिदितिब्रुवाणाकाचित्कन्या
चलचपलरेइत्यभिधत्तेइतिशेषपूरणेनव्याचिख्यासातर्हिविरोधद्वारापूर्वपूर्वोपमर्दद्योतकापिशब्दसमुच्चितशेषपूरणंकिमितिन
रोचयेः॥तस्मान्नारिकेलजलक्षीरसिताकदलमिश्रणे॥विलक्षणोयथास्वादोभावानांसंहतौतथेत्यवधेयं॥रसशबलदृष्टांतस्यानुस
रणमपिसाकूतमेव॥तद्यथा॥यएतेभावशांत्युदयसंधिशबलताध्वनयःसर्वैरुदाहृताविस्तरभियासमाख्यामात्रसमधिगतवि
शेषवत्तयात्रास्माभिर्नप्रदर्शिताःपरंतुतेप्यस्मत्प्रदर्शितभावध्वनिपदरूढानकंचनविशेषमितरमावहंति॥यतोविद्यमानतयाचर्व्य
माणेष्विदोसस्यवच्छिन्नत्वविनश्यदवस्थत्वसस्वफलोपधायकसामग्रीसमवहितत्वरूपसंधीयमानत्वैकसत्तापर्यवसितपरस्परस
मानाधिकरणत्वैःप्रकारैश्चर्व्यमाणेष्वपिभावेष्वेवप्राधान्यस्यावस्थानात्तेष्वेवचमत्कृतिविश्रांतेः॥यद्यप्युत्पत्तिविनाशसंधिशबलता
नांतत्तत्संबंधिनांचभावानांचर्वणाविषयतावैलक्षण्याभावान्नप्राधान्येकाचिद्विनिगमनातथास्थितौभावेष्वेवप्राधान्यस्यक्लृप्ततयाभा
वशांत्यादिष्वपितेष्वेवशांतिप्रतियोगिकत्वेनाभिव्यक्तेषुतस्याःकल्पयितुमुचितत्वात्॥किंचयदिभावशांत्यादेर्भावोनप्रधानंकिंतुतदुप
सर्जनकशांत्यादिरेवेत्यभ्युपेयतेतदाव्यज्यमानभावेष्वभिहिततत्प्रशमादिषुकाव्येषुभावप्रशमादिध्वनित्वंनस्यात्॥तथाहि॥तत्रभावे

र.नं. दयध्वनौ व्यज्यमानभावप्रतियोगिकस्योदयस्य वाच्यत्वे भावोदयध्वनित्वं न स्यात्॥ यथा॥ उषसि प्रतिपक्षनायिकासदनादंतिकमं नौका
९५ चति प्रिये॥ सुदृशो नयनाब्जकोणयोरुदियाय त्वरयारुणद्युतिः॥ अत्रोत्पूर्वकेणेतिना भावोदयस्य वाच्यतयैव प्रख्यापनात्॥ उदय
स्य वाच्यत्वेपि भावस्यावाच्यत्वाद्ध्वनित्वं सुस्थमिति चेत्॥ प्रधानस्य व्यपदेशानौपयिकत्वे प्रधानकृतव्यपदेशानुपपत्तेः॥ अस्म
न्मते तूत्तेर्वाच्यत्वेप्युत्तस्य वह्निन्स्यामर्षस्यावाच्यत्वादुक्त एव भावोदयध्वनिव्यपदेशः॥ एवं भावशांतिध्वनौ व्यज्यमानभा
वप्रतियोगिकस्य प्रशमस्य वाच्यत्वे भावशांतिध्वनित्वं न स्यात्॥ यथा॥ क्षमापणैकपदयोः पदयोः पतति प्रिये॥ शेमुः सरोजनयना
नयनारुणकांतयः॥ ननु शब्दवाच्यानां प्रशमादीनामरुणकांत्यैवान्वयादरुणकांतिप्रशमादेरेव वाच्यत्वपर्यवसितं न तु तादृशप्रश
मादिव्यंग्यस्य रोषप्रशमादेर्व्यंग्यव्यंजकभेदस्यावश्यकत्वात्॥ न चारुणव्यंग्यरोषस्यैव वाच्यीभूतप्रशमाद्यन्वय इति वाच्यं॥ वाच्यव्यं
ग्यप्रतीत्योरानुपूर्व्येण सिद्धतया वाच्यान्वयबोधवेलायां व्यंग्यैः सह व्यंग्यान्वयानुपपत्तेः॥ अन्यथा सुदृशोनयनाब्जकोणयोरित्यस्या
न्वयो न स्यात्॥ मैवं॥ एवमपि॥ निर्वासयंती धृतिमंगनानां शोभां हरेरेणदृशो धयंत्याः॥ चिराय राधस्मृतिमांसलोपि रोषः क्षणप्राघुणि
कोऽवभूवेत्यादावपि भावप्रशमध्वनित्वापत्तेः॥ भावस्य वाच्यत्वेपि प्रधानस्य तत्प्रशमस्य व्यंग्यत्वात्॥ उभयोरप्यवाच्यत्वमपेक्षितमि
ति चेत्॥ प्रागुक्तपद्यद्वये शमत्वोदयत्वाभ्यां शमोदययोर्वाच्यत्वादनुदाहरणतापत्तेः॥ इष्टापत्तिस्तु सहृदयानां नौचितीमावहति॥ त
स्माद्भावप्रशमादिष्वपि प्राधान्येन भावानामेव चमत्कारित्वं प्रशमादेस्तूपसर्जनत्वमतो न तस्य वाच्यत्वं दोषः॥ इदं पुनर्भावध्वनिभ्यो
भावशांत्यादिध्वनीनां चमत्कारवैलक्षण्ये निदानं॥ यदेकत्र चर्वणायां भावेषु वस्तुगत्या चर्वणीयतावच्छेदकतामर्षादिगतस्थित्यवच्छिन्ना राम:
मर्षादित्वममर्षादित्वमेव वा प्रकारोऽन्यत्र तु प्रशमावस्थत्वादिरपीति॥ रसस्य तु सामाजिकगतचिरंतनवासनारूपस्थायिमूलकत्वा ९५

त्र्श्रमादेरसंभवः॥ रावणादिविमर्शसंभाविनः सामाजिकगतोपिद्वेषादिरभिनवोदितोपिसंभाव्यतां॥ परंतुनासौचर्व्यमाणो
प्यलौकिकचर्वणाविषयः॥ किंतुलौकिकचर्वणाविषयस्तत्कृतश्चमत्कारइतिनासौविचारार्हइत्यादौत्वन्यत्रविस्तरः॥ रसशवलो
दाहरणमननुसंदधानस्योदाहरणन्यूनताशंकामपाकर्तुंस्मारयति॥ अत्रानयोर्भेदयोर्मध्यइत्यर्थः॥ दर्शितइति॥ तस्याप्येतदेवोदा
हरणमिनेनेत्यादिः॥ अत्रप्रव्रज्यैवशुभंभविष्यतीतिनिर्वेदः॥ तस्याराधायावचोममश्रुतिपथंजायेतेत्यौत्सुक्यं॥ ममचक्षुराग्रेस्मरःकु
इत्यधिक्षेपेणामर्षः॥ त्रिजगतीराधयाविनाशून्येतिभ्रमः॥ मनस्तपानिर्मुक्तैवेतिमतिः॥ मृगदृशोलावण्यमन्यादृशमप्रतिममिति

अत्ररसशवलोदर्शितः॥ भावशवलोयथा॥ प्रव्रज्यैवशुभंममश्रुतिपथंजायेततस्यावचश्चक्षुराग्रेममकःस्मरस्त्रिजगती
शून्याविनाराधया॥ निर्मुक्तैवमनस्तपामृगदृशोलावण्यमन्यादृशंधिग्जन्मकगतासिकिंविलपितैःक्वासिप्रसन्नाभव
॥ निर्वेदौत्सुक्यामर्षभ्रममतिस्मृतिविषाददैन्यानांभावानांसांकर्यादेषभावशवलइति॥ स्मृतिः॥ त्वंक्वानिर्धारितदेशगता

सितएवममजन्मधिगितितदलाभेविषादः॥ विलपितैरतःपरंप्राणान्नधारयिष्यामीत्यपार्थकवाक्यैःकिमस्तांमुखात्क्वासिप्रसन्नाभ
वयत्रस्यास्तत्रआगत्यप्रसादयेतिदैन्यंचसूच्यतइत्याह॥ एतावताप्रबंधेनह्यसंलक्ष्यक्रमस्यविषयोदर्शितः॥ झटितिप्रतीतेषुविभा
वानुभावव्यभिचारिभावेषुसहृदयतमेनप्रमात्रासूक्ष्मेणैवसमयेनप्रतीयमानानांसर्वेषामेवतस्याभिव्यंजकचर्वणाकालसंनिकृ
ष्टकालव्यक्तिकानामपिपरमार्थसद्धेतुहेतुमत्पौर्वापर्यवित्तिवेद्यत्वाभावात्॥ संप्रतितुयत्रकाव्येविभावादयोनसम्यक्प्रतीयंतेप्र
करणंवाविचारवेद्यंतत्रसामग्रीविलंबाधीनंचमत्कृतिमांद्यमेवेतिसंलक्ष्यक्रमोप्येषभवतीतिवक्तुमवसरः॥ ७ ॥ ७ ॥ ॥

र॰न॰ ननु यद्ययं रसादिः संलक्ष्यक्रमस्य विषयः स्यात्तदानुरणनभेदगणनप्रस्तावेर्थशक्तिमूलस्य द्वादश भेदा इत्याचार्याभिनवगुप्तपादानामुक्ति नोक्ता
९६ स्तथा तेनापि द्वादशात्मक इति मंमटभट्टानामुक्तिश्च विरुध्येत॥ वस्त्वलंकारात्मना हि द्विविधेन वाच्येन स्वतःसंभवित्वकविप्रौढोक्तिनिष्पन्न
त्वकविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नत्वैस्त्रिभिरुपाधिमिश्रैस्त्रैविध्यमापन्नेनात एव षडात्मना वस्त्वलंकारयोरिव रसादेरप्यभिव्यंजनादष्टादशत्व
प्रसंगादिति चेन्न॥ तद्ग्रंथस्य दिक्प्रदर्शनमात्रपरत्वात्॥ अन्यथा कविनिबद्धवक्तृकल्पितवक्तृप्रौढोक्तिनिष्पन्नत्वप्रयुक्तभेदानामगणनेन न्यूनता
पत्तेर्दुर्वारत्वात्॥ अस्य कविप्रौढोक्तिनिष्पन्नत्वेन क्रोडीकरणे कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नस्यापि तथात्वापत्तेरित्यलमनल्पजल्पेन॥ ननु प्रामा
णिकनिबंधात्संलक्ष्यक्रमव्यंग्यस्य वस्तुत्वमेव न रसादित्वमित्येव कल्पयितुमुचितमिति चेत्॥ अश्रद्दधानोस्मि॥ नह्युपलक्षणतास्माभिःकु
ध्यते॥ किंतु रसभावादिरर्थो ध्वन्यमान एव न वाच्यस्तथापि न सर्वोप्यलक्ष्यक्रमस्य विषय इत्यभिनवगुप्तपादाचार्यैरेवोक्तत्वात्॥ अत्र रसपदे
न रतिमात्रं विवक्षितमिति चेत्॥ कः संलक्ष्यक्रमतायां विद्वेषो बलवान्॥ न खलु धर्मिग्राहकमानसिद्धं रत्यादिध्वनेरसंलक्ष्यक्रमव्यंग्यत्वं॥ येन
त्वद्वचसि श्रद्दधीमहि॥ इत्थं च यदुक्तं॥ एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी॥ लीलाकमलपत्राणि गणयामास पार्वती॥ इत्यत्र कुमारीस्वाभाव्या
द्धोमुखत्वविशिष्टस्य लीलाकमलपत्रगणनस्योपपन्नत्वान्मनागविलंबेन नारदगिरः प्रभृत्युपक्रांतविवाहादिप्रसंगे बुद्ध्युपारूढव्रीडया अ
पि चमत्कारमात्संलक्ष्यक्रमोयं ध्वनिरित्यानंदवर्धनाचार्यैस्तत्राप्यसौ वस्तुध्वनिरेव न भावध्वनिरित्याग्रहस्त्यक्तव्यः॥ तथा प्राधान्य एव पारसा
दित्वमन्यथा तु रसादित्वमेवेत्यप्याग्रहो न कर्तव्यः॥ किंतु रसादित्वमनुमंतव्यमेव॥ भावालंकारादिप्रधानकाव्येषु रसध्वनिव्यपदेशानंगीकारस्या
पि संमतदिति चेत्॥ अनुक्तोपालंभ एवासौ॥ यतो न वयं तत्काव्यस्य रसध्वनित्वं मन्महे॥ किंतु तत्काव्यव्यंग्यस्य रसादे रसादित्वमात्रं॥ नहि वेदपा राम॰
रायणासमर्थब्राह्मणापत्यं ब्राह्मण्यहीनमिति वक्तुं शक्यं॥ प्राधान्यस्य प्रयोगोपाधित्वांगीकारादेवानतिप्रसंगात्॥ तस्मात्संलक्ष्यक्रमव्यंग्यः संल ९६

स्फक्रमवंगयोगुणोभावितात्माचेतिसिद्धं रसत्रैविध्यमित्यादिबहुतरमनुसंदधान आह॥सामान्यतोधर्मिण्युवगतेविशेषजिज्ञासा
वशात्प्रकारांतरेणतस्मिन्विभज्यमानेरसभावालंकाराणांपरस्परगुणप्रधानभावमापन्नानामभिव्यक्तिर्मनोविश्रामधामतापुरस्कृ
प्रायेत्याशयः॥उच्यतइतिशेषः॥भावालंकारयोरभिव्यक्तिंदर्शयितुंरसंविभजते॥अभिमुखत्वलक्ष्यति॥विमुखत्वलक्ष्यति॥भावाल
काराभिव्यक्तेर्विवेचनायततीयंविभजते॥यद्यपिवस्तुमुखोपितृतीयोवक्तुमुचितःयथाममअलकेफणिशावकग्रहान्ननुनासा
श्रितवान्शिखावलः॥रदनेकिमुदाडिमभ्रमान्मुखमुत्कंठमनेननामितमित्यत्रनासाभरणसौंदर्यातिशयोमुख्योमनोविश्रामहेतुत्वा

अथरसभावालंकाराणामभिव्यक्तिः॥रसस्त्रिविधोभिमुखोविमुखःपरमुखश्चेति॥व्यक्तैर्भावविभावानुभावैर्यस्याभिव्य
क्तिःसोभिमुखः॥भावविभावानुभावानामनुक्तत्वात्कष्टावगमोविमुखः॥परमुखोपिद्विविधः॥अलंकारमुखोभावमुखश्च
॥अलंकारमुखेलंकारोमुख्योमनोविश्रामहेतुत्वाद्रसोगौणः॥भावमुखेभावोमुख्योमनोविश्रामहेतुत्वाद्रसोगौणः॥अत्रप्रा
चीनसंमतिः॥अलंकारवरुविरमनोविश्रांतिकारिणि॥अलंकारस्यमुख्यत्वंगौणत्वंरसभावयोरिति॥अभिमुखाःस्वस्वप्र
करणेउदाहृताएव॥

द्रसोगौणइत्यस्यापिवक्तुंशक्यत्वात्तथापिभावालंकारयोरिवभावालंकारत्वाद्यनापन्नवस्तुमात्रस्यव्यक्तेःकथ
नस्यप्रतिज्ञायाःपूर्वमकृतत्वात्तद्रसोक्तरीत्यावाच्यवदेवपरिस्फुरणात्त्वतत्प्रदर्शनेपिनन्यूनतेतिसभेदोनोक्तः॥अलंकारस्यध्वनिप
दप्रवृत्तिनिमित्ततांदर्शयति॥भावस्यध्वनिपदप्रवृत्तिनिमित्ततांदर्शयति॥तत्रसंमतिमाह॥तदिदंव्याख्यातमधस्तात्॥उदाहरणन्यूनता
माशंकमानंनिरवधानंप्रत्याह॥श्लोकार्थःस्पष्टएव॥अत्रयथावितिपाठंप्रकल्प्यवाक्यभेदकल्पनाद्रुतरसानगुणेव॥ग्रंथकृदपिचैतेस

मागताइतिविवृण्वन्नपुरितिबहुवचनांतंपा
ठंव्यनक्ति॥

एतादृशप्रयोगानुरोधेनैव च पदद्वयसत्तिमार्मिकास्तार्किका अप्याख्यानेकवचनस्य शक्तिमेकत्वे विवदमाना एवाख्यातद्विवचनबहु नौका
र.ग. वचनयोर्द्वित्वबहुत्वयोः शक्तिमेकवाक्यतयांगीचक्रुः॥ नन्वेवमाख्यातबहुवचनोपस्थापितबहुत्वस्य मैथिल्यादिष्वन्वये मैथिली
९७ पदप्रयोज्यमैथिलीनिष्ठविशेष्यतायां बहुत्वप्रकारताद्वारा निरूप्या लक्ष्मणादिविशेष्यतास्वेवेति तेषां समासापत्तिः॥ एकपदप्रयो
ज्यविषयतायाः साक्षात्परंपरया वा निरूप्या या विषयता तत्त्वप्रयोजकत्वरूपसामर्थ्यस्यैव समासनियामकत्वात्॥ न चात्र समूहालंब
नस्यैव बोधस्यास्यस्या बहुत्वप्रकारताभेदान्नोक्तसामर्थ्यमिति वाच्यं॥ तथा सत्येकैकमैथिल्यादितात्पर्येण प्रकृतप्रयोगानुपपत्तेः॥

विमुखो यथा॥ मैथिली लक्ष्मणो रामः सुग्रीवः पवनात्मजः॥ लंकापुरं परित्यज्य पारं वारिनिधेर्ययुः॥ अत्र संकटम
खिलं समुत्तीर्य ते समागता इत्यद्भुतारसः कष्टादवगम्यते॥ अलंकारमुखो यथा॥ एषा नलेखा भ्रमतामलीनां भाति
प्रभातेन वकैरविण्याः॥ आलिंगतः किंतु तुषारभानोः कांतिः कलंकस्य वपुर्विलग्ना॥ यत्र नानाधर्मावच्छिन्नविशेष्यता

निरूपितैकाबहुत्वप्रकारता तत्रैव समवायस्यत्रित्वसंसर्गत्वात्॥ यत्र तु तादृशविशेष्यतानिरूपिताबहुत्वप्रकारताभिन्ना तत्रोद्दे
श्यतावच्छेदकव्याप्यपर्याप्तेरेव संसर्गतया मैथिल्यादिबहुत्वएव तथा प्रयोगसाधुतावसरात्॥ कथमन्यथा दिशो नेह सोगगनानी
तिप्रयोगस्यासाधुत्वमिति चेन्मैवं॥ प्रकृते निरुक्तसामर्थ्यसत्त्वेपि समासविधेर्विभाषाधिकारीयत्वादसमास इति समासः॥ प्रभातेन
वकैरविण्याः संकुचत्कुड्मलायाः कुमुदिन्याः प्रांते भ्रमतामलीनां लेखा पंक्तिर्न॥ किंतु आलिंगतः वर्तमानसामीप्ये वर्तमानवद्वालिंगि रामः
तवतः॥ अत एवाह॥ विलग्नेति॥ अन्यथा लगंतीत्येव वक्तुं युक्तं यत्तु धातुसंबंधे प्रत्ययाः इति व्याचख्यौ॥ तन्मंदं॥ विलग्नेत्यस्य संकुदंतत्वेन प्र ९७

तुषारभानोर्हिमरश्मेः कलंकस्य वपुर्विलग्नाकैरविणी संवृद्धा कांतिर्भवतीत्यर्थः॥ यथा वा मम॥ दानैः पिच्छिलिताः कचैर्दुरधिगाः सं
वीसिताहस्तिनः स्वभ्यस्तादृढपरूपातसुलभा न स्माः फलैः शाखिनः॥ प्रातर्यातिमधुव्रते विकसतिस्वार्थोपपन्नोदरान्नियातेमलि
नेमतंतुनलिनेसौजन्यजन्यंयशः॥ अत्राप्रस्तुतप्रशंसालंकारो मुख्यो दानवीररसो गौण इति विशेषः॥ सप्तसंख्याकसमुद्राबालकहीर
कसमुदायरूपालंकारवतीं मेदिनीं पृथ्वीं विप्रकुलाय कृप्तभूसुरेभ्यो बहुभ्यो दातुं संकल्पसूचकवाक्योपक्रमं योजितवतः कृतवतो भाग
वस्य किमप्यतिशयितं व्रीडास्मितमत्रोक्तप्रतिज्ञानिर्वाहप्रकृतार्थिकामप्रपूर्णयोर्विरोधादित्यपव्याख्यानं॥ हस्तप्रसारणमात्रेणसंप्रदा

अत्राप्रकृतेरलंकारस्य मुख्यता॥ भावमुखो यथा॥ सप्तांभोनिधिनीरहारपटलालंकारिणीं मेदिनीं दातुं विप्रकुलाय यो ॥
जितवतः संकल्पवाक्याद्यमं॥ नाभीनीररुहात्सरोरुहभुवा तत्कालमाविष्कृते हस्तांभोरुहि भार्गवस्य किमपि व्रीडास्मितं पातु ॥२॥
वः॥ अत्राद्भुतभावस्य मुख्यता दानवीररसो गौणः॥ विद्वद्वारिधराः स्नेहं तथा वर्षंत संततं॥ लभते विपुलां वृद्धिं यथा रसतरंगिणी

नोनूरवर्जेनाप्रतीतेः॥ कुलपदस्य कुलीनपरतया पुपपत्तेर्बहुलाप्रत्यापकत्वाच्च॥ किं च विंरस्यपितामहाद्यालंबनकत्वप्रसक्त्यालोकापवा
देनव्रीडाव्यंजकं स्मितमिति व्याख्येयं॥ तदेतदुक्तं पित्राद्यालंबनेन यावर्णमान उत्साह आभासरूत्यधस्तात्॥ वः पातु कस्मिन्सति सरोरुह
भुवाब्रह्मणानाभीनीररुहान्नारायणावतारभूतस्वकीयनाभीसंबंधिकमलाद्धस्तांभोरुहिपाणिहस्तरूपेंभोरुह्यभासित्यागजलानिरीहंतिवी
जभूतान्यंततः फलसंसृष्टानि भवंति यस्मात्तादृशे तत्कालं झटित्याविष्कृते प्रसारिते सतीत्यर्थः॥ स्वकीयेनवृत्तेर्विद्वत्परिशीलनं विनाद्दर्पद
र्ह्ममन्वानस्तान्यार्थयते॥ विद्वद्वारिधरा इति॥ हे पण्डिता हे वागमृतप्रयोक्तार इत्यर्थः॥ स्वग्रंथोदाहरणेषु परकीयत्वाशंकावारपन्देवनाप्रसादा

पत्रलिमास्तिमस्पिछाअंदेलता·प्रक्षप्रते॥

दिव्यां॥ निमज्जनोन्मज्जनक्रीडाहेतुं गूढागूढं यं गम्यामिति यावत्॥ स्वकीयं तनुरत्न येस्य ग्रंथस्य कर्ता मनोनिबध्नन्स्वयशः प्रथयित्री 
मेनामस्मा शास्ते॥ कापि॥ काचपटीवरसाद्भुता॥ मेभानोरिति॥ एतेन रसतरंगिणी पद प्रवृत्तिनिमित्तमुक्तमिति विरम्यते॥ श्रीरस्तु॥
प्राचां म्नाप्याशिरसाजन्होरिव मंमटस्य कुक्षिगता॥ अधिधरणि मयानीता तरंगिणी यं भगीरथेनेव॥१॥ गंगायमुनाभ्यंतः सरस्वती
सर्वसमता जयति॥ आस्तिकसंवादिन्यपि नास्तिक्यं नोपहस्यते जगति ॥ २ ॥ नानार्थनादृतकलो भूसुरराजोपि यत्र संक्लिष्टः
॥ सूर्येन्मुद्रितपद्मेपतं तु तत्राधुनामधुपाः॥३॥ दरपुस्तकं संपदो निजमनो गौरीकलत्रालये भावोद्गूढरसप्रधानसरणिः सेषा त
रंगिण्यपि॥ तावत्सामपि कार्यसंकटततो नौका समास्तिस्तु पास्वस्ति श्रीयमदेवपंडितविभोरव्याहता जेवसा॥४॥ पत्यास्वगेसुखा

अवगाहस्व वाग्देवि दिव्यां रसतरंगिणीं॥ अस्मत्पद्येन पद्येन रचयश्रुतिभूषणं॥२॥ यावद्भानोः सुताकापि कालिंदी
भुवि वर्तते॥ तावत्तिष्ठतु मेभानोरेषा रसतरंगिणी॥३॥ इति प्रकीर्णकं नामाष्टमस्तरंगः॥ समाप्तश्चायं ग्रंथः॥

भिमुख्यपदवीं यातुं समुत्कंठया यस्य स्वात्मनिरोधया दिनकरो जीवातुरालक्षितः॥ आस्माकीनकृतिहिद्दर्विविगलत्काव्यामृता
व्यापितं यच्चामस्त सुतेन सोस्य फलितं शार्दूलविक्रीडितं॥५॥ गंगाधरस्य गंगेव विस्रो विष्णुपदीव वा॥ नौकाबुधाविना भूःस्ताद्गीं
र्वाणगीर्वाणगौरवी॥६॥ ग्रहांकनगपृथ्व्यंके १७९९ नौकागिरसि वत्सरे॥ एकद्वित्रिचतुः श्लोका ४३२१ गंगारामेण पूरिता
॥७॥ ॥ इति श्रीजड्युपनामकगंगारामविरचितायां नौकाख्यायां रसतरंगिणीव्याख्यायामष्टमस्तरंगः॥ समाप्तश्चायं ग्रंथः॥ 

वाराणसीप्रसादस्य नियोगेन तु पत्त्लतः॥ काशीसंस्कृतमुद्रायामंकितोयं शिलाक्षरैः॥१॥ श्रीकाशीजी मे महल्ले होदकटोरा श्रीबाबूवाराणसीप्रसादजीके मकानमे काशी
संस्कृतमुद्रायंत्रमे छपा जिनको लेना होय उनको श्रीबाबूवाराणसीप्रसादजीके पास पक्कीरीगलीमे भाईप्रतापसिंहजीके दुकानपर मिलेगी संवत् १९४२ ॥ ॥

